मल्लिनाथविरचित-सञ्जीवनीसमेत्

# रघुवंशमहाकाव्यम्

प्रसङ्गान्वय-चन्द्रिका-संस्कृत-हिन्दी-व्याख्योपेतम्

( II सर्गः )



व्याख्याकारः

देवेन्द्र झा

महाकविकालिदासविरचितम्

# रघुवंशमहाकाव्यम्

( महामहोपाध्याय-कोलाचलमल्लिनाथविरचितया सञ्जीविन्या
अन्वय-वाच्यपरिवर्तनचन्द्रिका-व्याख्या-समासः
हिन्दीशब्दार्थ-हिन्दीश्लोकार्थादिना च सहितम् )

## द्वितीयः सर्गः

व्याख्याकारः
पण्डित जितेन्द्राचार्यः

भारतीय विद्या प्रकाशन
वाराणसी ** दिल्ली

प्रकाशक :—
भारतीय विद्या प्रकाशन
१. पो० बा० ११०८ कचौड़ीगली, वाराणसी २२१००१
२. यू० बी० बँग्लो रोड, जवाहर नगर, दिल्ली ११०००७

अन्य प्राप्ति स्थान :—
भारतीय बुक कारपोरेशन
५ यू० बी० बँग्लो रोड, जवाहर नगर, दिल्ली ११०००७

चतुर्थ संस्करण १९८९

मूल्य [redacted] 5--00

मुद्रक :—
लक्ष्मी प्रिंटर्स
सा० २/३६४, आजमगढ़ रोड
पाण्डेयपुर, वाराणसी

# रघुवंशमहाकाव्यम् ( द्वितीयः सर्गः )

## श्लोकानुक्रमणिका

# आलोचना

१. कालिदासस्य जीवनपरिचयः—संस्कृतसाहित्याध्ययनाध्यापनपरिशीलनव्रतपराणाञ्छात्राणामध्यापकानां विद्वत्तल्लजानाञ्च पुरतः कविकुलशिरोमणि-कालिदासविषये किञ्चित्कथनं लेखनं वा भानवे दीपदर्शनमिव सारहीनम्प्रतीयते। यतो हि वाल्मीकिव्यासयोरनन्तरं यथा प्रतिष्ठा कालिदासमनुगता न तथा कोऽप्यन्यः कविर्लेभे। न केवलमेतत्, अपितु भारतीयानाम्पाश्चात्यानाञ्च समालोचकानाम्मापकतुलासु तन्निकषेषु च कविकालिदासः संस्कृतभाषायाः श्रेष्ठः कविस्सिद्धो भवति, सः देशकालयोः सीम्नि बद्धुन्न शक्यते। युवावस्थायां कालिदासोऽत्यन्तं मूर्खं आसीदित्येषा श्रूयते किंवदन्ती। यस्यां वृक्षशाखायामुपविष्ट आसीत्सः तामेव शाखां शङ्कुल्या छिन्दन्नासीत्। सर्वे राजाश्रिताः विद्वांसः एतस्य मूर्खतां दृष्ट्वा विदुषीं विद्योत्तमां राजकुमारीमूचुः—"हे कुमारिके! त्वत्तो विशिष्टः कोऽपि विद्वान् समागतो वर्तते। सः त्वया शास्त्रार्थकरणाय समुत्सुकोऽस्ति।" एतदनन्तरं शास्त्रार्थः प्रवृत्त उभयोः। शास्त्रार्थे च पूर्वं विद्योत्तमया पराजितानां राजपण्डितानां षड्यन्त्रेण सा राजकुमारी पराजिता। ततश्च तैः राजपण्डितैस्तस्याः राजकुमार्याः कालिदासेन सह परिणयोऽपि सम्पादितः।

अथ कदाचिद्राजप्रासादपृष्ठे विद्योत्तमाकालिदासौ समुपविष्टवास्ताम्। तस्मिन्नेव काले घण्टापथे गच्छन्तं क्रमेलकसमजं दृष्ट्वा विद्योत्तमा पप्रच्छ कालिदासम्—"के इमे गच्छति?" एवं पृष्टः सन् कालिदास उवाच—"उट्ट्र" इति।"

एवं "उष्ट्र"-शब्दस्य स्थाने "उट्ट्र" इत्यपशब्दं श्रुत्वा क्रोधवशंगता विद्योत्तमा कालिदासं राजप्रासादपृष्ठान्नीचैर्निचिक्षेप। संयोगवशात् तत्क्षणं सः महाकालीचरणयोः शरणम्प्रपन्नः। तदानीम्प्रसन्ना महाकाली प्रोवाच "वत्स!" वरं वृणीष्व।" परन्तु कालिदासः तदभिप्रायानुगमाऽभावात् विद्योत्तमानिक्षेपणहेतोश्च "कुतस्त्वमायात" इत्यस्योत्तरमनुसन्दधान उपरिष्टादङ्-

गुलिनिर्देशकुर्वाणः विद्याशब्दमुच्चचार ! तस्यायमभिप्राय आसीद्यत् "विद्योत्तमा" मां निचिक्षेप, इति।" विद्येति वरयाचनोत्तरं श्रुत्वा महाकाली परमप्रसन्ना सती "तथास्तु" इत्येवं वरं ददौ।

एतद्वरानन्तरं विद्याप्रसादसम्पन्नः कालिदासः स्वधर्मपत्न्याः विद्योत्तमायाः द्वारमुपेत्यार्गलां खट्खटायाञ्चक्रे। अर्गलाध्वनिं श्रुत्वा विद्योत्तमा पप्रच्छ "कोऽस्ति ?" उत्तरमागतम् "अहं कालिदासोऽस्मि।" तदा पुनः विद्योत्तमाऽन्वयुङ्क्त—"अस्ति कश्चिद्वाग्विशेषः ?" कालिदास एतस्मिन्वाक्ये प्रयुक्तेषु शब्देषु प्रतिशब्दमधिकृत्यैकैकं काव्यं विरचितवान्। "अस्ति"–पदमधिकृत्य "अस्त्युत्तरस्यां दिशि देवतात्मा" इति प्रतीकेन "कुमारसम्भवम्" नाम महाकाव्यञ्चकार। "कश्चित्"–पदमधिकृत्य "कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः" इति प्रतीकेन "मेघदूतम्" निर्ममे। "वाक्"–पदमधिकृत्य "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये" इति प्रतीकेन "रघुवंशम्" महाकाव्यं व्यधात्। "विशेष"–पदमधिकृत्य "विक्रमोर्वशीयम्" "मालविकाग्निमित्रम्" "अभिज्ञानशाकुन्तलम्" इत्यादीनि नाटकानि लघुकाव्यानि च जग्रन्थ। एवम्प्रदर्शितकाव्यविद्याकुशलः कालिदासः पण्डितम्मन्याया: विद्योत्तमायाः मानमर्दनं व्यधात्।

एवं हि श्रूयते कदाचित् भारतीयकविसमाजे श्रेष्ठकवीनां गणना समारब्धा। तदानीं कालिदासाय कनिष्ठिकाङ्गुलिः कविभिर्निर्धारिता। तदनन्तरं कालिदासात् श्रेष्ठकवीनां कृतं उत्तरोत्तरमङ्गुलिस्थानं व्यवस्थापितम्। किन्तु कालिदासादुत्कृष्टकवेरभावात् ततःप्रभृति कनिष्ठिकाङ्गुलिपार्श्वस्थिताङ्गुलिनाम "अनामिका" इति प्रसिद्धिमगात्। अस्मिन्विषये प्रसिद्धोऽयं श्लोको गीयतेऽभियुक्तैः—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥

कालिदासस्य कालनिर्णयः——कविकुलशिरोमणेर्महाकवेः कालिदासस्य जन्मनिवासादिवर्णनविषये तद्रचितमहाकाव्यनाटकादिषु न क्वापि किञ्चिद् निर्दिष्टम्। अतोऽस्य विषये किमपि वास्तविकमुद्घोषणमसम्भवमेव। तथापि केचनैतिह्यविदो वदन्ति यत्कालिदासः गुप्तवंशीयस्य चक्रवर्तिनो महाराजस्य

कुमारगुप्तस्य समये बभूव। अतएव रघुवंशे ( सर्ग ४, श्लोक २६), "स गुप्त-मूलप्रत्यन्तः" इति श्लोके "गुप्त"-शब्द निर्दिदेश तथा "आकुमारकथोद्धताम्" ( सर्ग ४, श्लोक २० ) "कुमार"-शब्दप्रयोगात् कालिदासः कुमारगुप्तकाले बभूव परन्त्वेवं कथनं श्लोकेभ्यः हठादाकृष्टस्यार्थस्य क्लिष्टा कल्पना किमुचितेति सर्वतो विभावयन्तु सुधियः।

केचन पाश्चात्याः विद्वांसः कालिदासस्य सत्ता ईशायाः षष्ठशताब्दीम्, पञ्चमम् शताब्दीम्, प्रथमशताब्दीं वा मन्यन्ते। ईशायाः षष्ठशताब्दीमतप्रवर्तक डा० फर्गुसन नामा विद्वात् बभूव। तेनोक्तं यत् ५४४ ईशवीये महाराजविक्रमादित्यः हूणान्पराजित्य तद्विजयस्मृतौ स्वसंवत्सरं प्राचीचलत्। अयमेव कालिदासाऽभिमतो विक्रम आसीत्। डा० मैक्समूलरोऽप्येवमेव मतं प्रतिजज्ञे। डा० कीलहार्नमतमस्ति यत् ईशायाः षष्ठशताब्द्यां कालिदासः यशोवर्मण नृपस्याश्रित आसीत्। तस्यैव यशोवर्मणो दिग्विजयमधिकृत्य रघोर्दिग्विजयशंसिनो रघुवंशमहाकाव्यस्य रचना तेन कृता। परन्तूक्तमतं भ्रान्तिपूर्णमस्ति, हेतुस्तत्र ५४४ ईशवीये न कोऽपि विक्रमादित्यो बभूव। यदि कथञ्चित् कश्चित् स्यादपि तथापि सः हूणादिक एव भवितुमर्हति नाऽयं शकारिः। विश्वेतिहासे सञ्चालितस्य वर्तमानस्य संवत्सरस्य षडशीतिवर्षपूर्वं प्राचीनताद्योतनाय न किमपि दृष्टान्तं दृग्गोचरीभवति। ४७३ ईशवीयस्य मन्दसौरशिलालेखे मेघदूतस्य, ऋतुसंहारस्य च पद्यानां स्पष्टं स उल्लेखो दृश्यते। अतः ईशायाः शताब्द्यां कालिदासस्य स्थितिः निराधारा एव प्रतिभाति। ईशायाः पञ्चमशताब्दीप्रवर्तकाः पाश्चात्यास्तथा कतिपये भारतीया अपि विद्वांसो दृश्यन्ते। तेषामयं विचारोऽस्ति यत् गुप्तकालो भारतीयसाहित्यस्य स्वर्णयुग इति मन्यते। द्वितीयः सम्राट् चन्द्रगुप्तः "विक्रमादित्य" इत्युपाधिं सम्प्रधार्य शकान् पराजित्य। कालिदासस्य रघुवंशम्, विक्रमोर्वशीयम्, कुमारसम्भवम् प्रभृति महाकाव्येषु कुमारशब्दस्य गुप्-धातोश्च प्रयोगाः कालिदासस्य गुप्तकालीनत्वं स्पष्टं संसाधयन्ति।

कालिदासस्य जन्मस्थाननिर्णयः—कालिदासस्य जन्मविषये प्राच्यैः प्रतीच्यैश्चैतिह्यविद्भिर्न किञ्चित् प्रामाणिकरूपेण निर्दिष्टन्तथाप्यस्माकम्मतेन तु सः उज्जयिन्यास्तत्पार्श्ववर्तिभागस्यैव वा वास्तव्य आसीदित्यनुमीयते।

यतो हि तेन पूर्वमेघदूते सप्तविंशे श्लोके तथा एकत्रिंशे श्लोके स्पष्टमेव निर्दिष्टम्—

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशाम् ।
सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः ॥
(पू० मे० २७)

यथा—

यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः ।
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥
(पू० मे० ३१)

एतच्छ्लोकोक्तविवरणाद् सिप्रायाः उज्जयिन्याः वर्णनहेतोश्च कालिदासः उज्जयिन्याः तत्पार्श्ववर्तिन्याश्च वसुन्धरायाः निवासी समनुमीयते । केचन विद्वांसः बङ्गानां, कश्मीराणां, विदर्भाणां वा निवासिनं तं मन्यन्ते यच्च नितान्तम्भ्रममूलकमेव प्रतिभाति ।

**४. कालिदासस्य कृतयः**—"अस्ति कश्चिद्वाग्विशेषः" इतिनिर्देशानुसारम् "कुमारसम्भवम्", "मेघदूतम्", "रघुवंशम्" इत्येतानि त्रीणि काव्यानि विश्वविश्रुतानि निर्दिश्यन्ते । येषामनुवादाः प्राच्यप्रतीच्यविद्वद्भिस्स्वस्वभाषासु सम्पादिताः । "अस्तिकश्चिद्वाग्विशेषः" इति वाक्योक्त-"विशेष"-पदेन प्रतीकरूपा कृतयः "मालविकाग्निमित्रम्", "विक्रमोर्वशीयम्", "ऋतुसंहारः", "कुन्तलेश्वरदौत्यम्", "घटखर्परकाव्यम्", "रांक्षसकाव्यम्", "दुर्घटकाव्यम्", "नलोदयः", "वृन्दावनकाव्यम्", "विद्वद्विनोदकाव्यम्", "पुष्पबाणविलासः", "नवरत्नमाला", "ज्योतिर्विदाभरणम्", "अम्बास्तवः", "कालिस्तोत्रम्", "गङ्गाष्टकम्", "कल्याणस्तवः", "शृङ्गारसारः", "शृङ्गारतिलकम्", "सेतुबन्ध" इत्यादिकाव्यनाटकमुक्तकरूपेणात्यन्तप्रसिद्धानि सन्त्येव तथापि तन्निर्मित "अभिज्ञानशाकुन्तलेन, श्रुतबोधेन" च यत्पदम्प्राप्तम्, तन्न किमप्यन्यदुपलेभे । अभिज्ञानशाकुन्तलस्यानुवादः स्वस्वशैलीमनुसृत्य स्वस्वभाषासु बहूभिः विद्वद्भिर्विहितः । एतद्विषये स्पष्टमुक्तमभियुक्तैः—

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥

एवमेव 'श्रुतबोधः" इतिनामाभिधं छन्दःशास्त्रं यद्यपि कालिदासेन लघुतमरूपेण लिखितमस्ति तथापि तस्येदं वैशिष्ट्यमस्ति यच्छन्दसां निरूपणं तत्तच्छन्दस्यैव कृतमस्ति, अन्येषु छन्दोविधायकग्रन्थेषु नैवंविधं छन्दसां वर्णनमस्ति।

कालिदासस्य वैशिष्ट्यम्—महाकविकालिदासः स्वकाले शृङ्गाररसस्य उपमाऽलङ्कारस्य च उद्भटः विद्वान् सासीत्। अत एव कविशिरोमणिर्वाणभट्टः स्वोपज्ञे "पदव्यञ्जना" नामाभिधे ग्रन्थे कालिदासस्य विषये विशदं निरूपयाञ्चक्रे—

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

अर्थात् कालिदासस्य रससिक्तासु सुमधुरसूक्तिषु सहकारमञ्जरीष्विव कस्य प्रीतिर्न जायते ? अपि तु सर्वस्यैव जनस्य तत्राकर्षणं जायते।

सामान्यतया कालिदासः सर्वास्वलङ्काररचनासु प्रसिद्ध एवास्ति, परन्तु उपमाऽलङ्कारविधाने न कोऽपि कविः क्षणमप्यवतिष्ठते। तथाहि—

"मार्गाचलव्यतिकराकुलितेव सिन्धुः,
शैलाधिराजतनया न ययौ न तस्थौ।"
"सञ्चारिणी दीपशिखेव रात्रौ,
यं यं व्यतीयाय पतिंवरा सा॥"
"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये,
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥"

इत्यादिश्लोकेषु परश्शता उपमाऽलङ्काराः लभ्यन्ते, परन्तु रामरावणयोर्महति भयङ्करे युद्धे उपमाऽलङ्कारनिरूपणसमये कालिदासः किमप्युपमानमलभमानः स्पष्टं व्याजहार—

रामरावणयोर्युद्धं रामरावणयोरिव।

एवमेव भगवतो मर्यादापुरुषोत्तमस्य रामस्य विषये कल्पतरुः, सुमेरुः, चिन्तामणिः, सूर्यः, चन्द्रः, कामदेवः, राजाबलिः, कामधेनुः प्रभृतिषु उपमालङ्कारस्थानभूतेष्वपि तेषामुपमालङ्कारस्थानभूतानां खण्डनं कुर्वाणः कालिदासः सडिण्डिमं कवीनां पुरस्तात् प्रश्नमुपस्थाप्य महतीं चमत्कृतिं प्रदर्शितवान् । तथा हि—

काष्ठं कल्पतरुः सुमेरुरचलश्चिन्तामणिः प्रस्तरः,
सूर्यस्तीव्रकरः शशी क्षयकरः क्षारो हि वारांनिधिः ।
कामो नष्टतनुर्बलिर्दितिसुतो नित्यं पशुः कामगौः,
नेतास्तान् तुलयामि भो रघुपते ! केनोपमा दीयताम् ॥

महाकविकालिदासः परमशैव आसीत् । अत एव सः प्रतिकाव्यम् शिवस्य वन्दनामकरोत् । प्रसिद्धे स्वमहाकाव्ये रघुवंशे सः "जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।" अस्मिन् माङ्गलिके श्लोके "पार्वतीपरमेश्वरौ" पदेन शिवपार्वत्योर्वन्दना तेन कृता, तथापि सः परमवैष्णवः "पार्वतीपरमेश्वरौ" पदेन शिवपार्वत्योः रमाविष्णोश्चापि बोधो भवति । यथा—पार्वतीं पातीति पार्वतीपः । पार्वतीपश्च रमेश्वरश्च इति 'पार्वतीपरमेश्वरौ' इत्येवं व्युत्पत्त्या शिवस्य विष्णोश्च वन्दना कालिदासेन कृतेति स्पष्टं प्रतिभाति ।

# दिलीप-सिंह संवाद ( हिन्दी )

हाथ की अंगुलियों के वाणपुच्छ पर स्तम्भित होने से चकित राजा दिलीप को और भी चकित करता हुआ सिंह, मनुष्य की वाणी में इस प्रकार सम्बोधित किया—हे राजन् ! तुम्हारा परिश्रम व्यर्थ है। तुम्हारे द्वारा प्रयुक्त शस्त्र इधर से व्यर्थ हो जायेंगे। मैं भगवान् शिव का सेवक और निकुम्भ का मित्र कुम्भोदर हूँ। यह जो सामने देवदारु का वृक्ष देख रहे हो, इसे माँ पार्वती ने पुत्रवत् स्नेह से पाला है। किसी समय किसी जंगली हाथी ने अपनी खुजली मिटाने हेतु इसे अपने गण्डस्थल से रगड़ दिया, जिससे इसकी त्वचा उघड़ गयी। यह देख पार्वती को वड़ा दुःख हुआ। तभी से भगवान् शिव ने मुझे सिंह रूप देकर समीप आये प्राणियों से भोजन-वृत्ति का आदेश देकर यहाँ नियुक्त किया है। अतः परमेश्वर शिव ने ही इस गौ को मेरे भोजन के लिए भेजा है। तुम लज्जा छोड़कर लौट जाओ।

सिंह की बातें सुनकर राजा ने कहा—हे मृगेन्द्र ! यद्यपि मेरा कथन तुम्हारे हास्य योग्य ही है, फिर भी कहता हूँ। भगवान् शिव मेरे लिए आदरणीय हैं। लेकिन सम्मुख नष्ट होता हुआ यह गुरु का धन भी मेरे लिए उपेक्षिणीय नहीं है। इसलिए आप मेरे शरीर से अपनी सन्तुष्टि कर इस गौ को छोड़ दें।

राजा की बातें सुनकर सिंह हँस कर बोला—राजन् ! संसार में व्याप्त एक-छत्र राज्य, नववय, सुन्दर शरीर, इन सबकी एक गौ के लिए हानि करने वाले, तुम विचार-मूढ लगते हो। तुम्हारे वलिदान से केवल इस गौ का भला होगा। तुम जीवित रहकर पिता की भाँति अपने परिजन-समुदाय की रक्षा कर सकते हो। अगर एक धेनु के नष्ट होने के अपराध से गुरु के क्रोध से डरते हो तो सैकड़ों गायें दान कर कोप को दूर किया जा सकता है। इसलिए तुम अपने शरीर की रक्षा करो।

राजा ने फिर कहा—हे मृगेन्द्र ! क्षत्रिय शब्द लोक में क्षति से रक्षा करने वाला अर्थ में रूढ है। इसके विपरीत चलने वाले को प्राणों से या राज्य से

क्या प्रयोजन ? गुरु वशिष्ठ का कोप दूसरी सैकड़ों गायों के दान से भला कैसे दूर होगा। क्योंकि जिसे तुम सामान्य समझते हो, वह कामधेनु की पुत्री नन्दिनी है। उसे मैं अपना शरीर देकर तुमसे छुड़ाना चाहता हूँ। यह न्यायोचित भी है। आप भी पराधीन हैं। रक्ष्य की क्षति होने पर स्वामी के सम्मुख नहीं ठहर सकते। यदि आप मेरे शरीर को अहिंस्य मानते हो तो भी मेरे यशःशरीर पर ही दया कीजिये। हम दोनों के बीच बातचीत से मित्रता हो चुकी है। अतः आप मित्र के प्रणय-निवेदन को न ठुकरायें।

यह सुनकर सिंह ने कहा—ऐसा ही हो। इतना कहकर उसने गौ को मुक्त कर दिया। राजा दिलीप भी सिंह के आक्रमण की प्रतीक्षा में अपने शरीर को पिण्डवत् कर स्थित हो गये।

—०—

## दिलीप-सिंहयोः संवादः

बाणपुच्छेषु सक्ताङ्गुलिं आश्चर्यचकितं दिलीपं अत्यधिकं विस्मापयन् मनुष्य-वाचा स सिंहः इत्थं सम्बोधितवान्—भो राजन् ! मयाक्रान्तस्य धेनोः रक्षणे तव प्रयुक्तानि शस्त्राणि व्यर्थानि एव। अहं तु परमेश्वरस्य शिवस्यानुचरः निकुम्भ-मित्रः कुम्भोदरः। यं देवदारुवृक्षं पुरः पश्यसि तत् भगवत्या पार्वत्या पुत्री-कृतः। कदाचित् केनापि वनद्विपेन कण्डूयमानेन गण्डस्थलेन अस्य त्वक्क्षतं सञ्जातः। तेनाम्बा पार्वती भृशं दुःखिता बभूव। तदा प्रभृति एव पुनः न कोऽपि वनद्विपः अमुं नाशयेत् इति भगवता शिवेन मह्यं सिंहस्य आकृतिं प्रदाय अत्रा-गतैः सत्त्वैर्जीविकां विधाय च अस्य रक्षार्थं अत्र नियोजितः। अतः इयं गौः परमेश्वरेण शिवेन एव मम भोजनवेलायाम् अद्याहारार्थं प्रेषिता। त्वं लज्जां विहाय निवर्तस्व।

सिंहस्य वचनानि श्रुत्वा विस्मितः लज्जितः च राजा अवदत्—भो मृगेन्द्र ! यद्यपि मे वचनं तव हास्याय एव तथापि शृणु स्थावरजङ्गमानां पतिः सः

शिव: मे मान्य:, तथापि इयं मुनिहोमधेनु: सम्मुखं पश्यत एव विनश्यमाना कथमपि न उपेक्षणीया । अत: मम शरीरेण आत्मतुष्टिं विधाय एनां मुञ्च ।

राज्ञ: वच: श्रुत्वा सिंह: विहस्य जगाद—राजन् ! भूमण्डले व्याप्तं एकातपत्रं राज्यम्, नववयम्, कान्त: वपुः च एतत् सर्वं एकस्य धेनो: कृते हातुमिच्छत: भवान् विचारमूढ इव प्रतिभाति । तव अनेन बलिदानेन केवला इयं गौरेव जीविता भविष्यति, तव जीवनेन तु सकला प्रजा धन्या भविष्यति । यदि त्वं एकस्य धेनो: चण्डापराधभयात्, मुनेः कोपभयात् च विभेषि तदप्यलम् । शतपयस्विनीदानेन गुरुं तोषयितुं शक्योऽसि । अत: एनां विहाय स्वशरीररक्षणं कुरु ।

राजा पुन: प्रत्युवाच—भो मृगेन्द्र ! लोके क्षतात् त्रायत इति क्षत्रियः शब्द विश्रुत: । एतत् विपरीतं प्राणै: राज्येन वा किम् प्रयोजनम् । गुरोर्वसिष्ठस्य कोपमपि शतपयस्विनीदानेन निवारयितुमशक्य: । इयं हि दुष्प्रधर्षा कामधेनो: पुत्री शिवस्य प्रभावेण एव त्वया आक्रान्ता । इमां नन्दिनीं स्वशरीरेण विनिमातुं अभिलषामि । इदं न्यायोचितम् । भवानपि पराधीन: सेवकः एव । रक्ष्यस्य हानौ रक्षक: भृत्य: स्वामीसम्मुखे स्थातुं न शक्यते इति जानात्येव । मम शरीरं अहिंस्य मन्यसे चेत्, मम यशःशरीरमेव दयां विधेहि । परस्परसम्भाषणेन आवयो: मैत्रीसम्बन्धः स्थापित: । अत एव मे प्रणयनिवेदनं पालय ।

इयं श्रुत्वा तुष्ट: सिंह एवमेतत् इत्युक्त्वा गां मुमोच । राजा दिलीपः स्वशरीरं पिण्डवत् कृत्वा सिंहस्याक्रमणं प्रतीक्षितवान् ।

---

# रघुवंश महाकाव्य ( द्वितीय सर्ग )

## संक्षिप्तकथा ( हिन्दी )

कुलगुरु वशिष्ठ के आश्रम में राजा दिलीप अपनी पत्नी सुदक्षिणा के साथ पुत्र की कामना से पहुँचे । उन्होंने कुलगुरु से अपना कष्ट निवेदन किया ।

वशिष्ठ मुनि ने उन्हें कामधेनु की पुत्री नन्दिनी की सेवा करने का उपदेश दिया। मुनि का उपदेश पालन करने के लिए दूसरे दिन प्रभात वेला में ही सन्नद्ध हो गये। दोहन क्रिया सम्पन्न होने के बाद राजा ने नन्दिनी को वन में चराने के लिए छोड़ा। प्रस्थान के समय सुदक्षिणा ने गन्धमाल्यादि के द्वारा नन्दिनी की पूजा की। कुछ दूर तक पहुँचाने के लिए सुदक्षिणा और परिजन भी साथ चले। पर राजा ने सबको लौटा दिया। राजा दिलीप नन्दिनी की छाया बन कर अनन्य भाव से सेवा करने लगे। इस प्रकार उन्हें सेवा करते २१ दिन बीत गये। तब नन्दिनी ने उनके मन के भावों की कठिन परीक्षा हेतु गंगा-प्रपात के निकट हिमालय की घाटी में प्रवेश किया। वहाँ राजा दिलीप प्राकृतिक सुषमा में खोये थे कि एक सिंह ने नन्दिनी पर आक्रमण कर दिया। नन्दिनी ने रक्षार्थ राजा को आवाज दी। उसकी दर्द-भरी आवाज सुनकर राजा दिलीप ने जब उधर देखा तो सिंह को देखकर उनका क्रोध बढ़ गया। उन्होंने तरकश से तीर निकालना चाहा। पर उनकी पाँचों अंगुलियाँ बाण के पुच्छ-भाग पर निष्क्रिय हो चिपक गयीं। भुजा के स्तम्भन से अत्यधिक अशक्त एवं क्रुद्ध राजा के विस्मय को बढ़ाते हुये सिंह ने मनुष्य की वाणी में उनसे कहा—राजन्! मैं भगवान् शिव का अनुचर इस वृक्ष का रखवाला हूँ। समीप आया जीव ही मेरी आजीविका है। मुझे जंगली हाथियों से इस वृक्ष की रक्षा के लिए नियुक्त किया गया है। यह गौ परमेश्वर से निर्दिष्ट समय पर स्वयं मेरे पास उपस्थित हुई है। अतः तुम लौट जाओ। शस्त्र से जिसकी रक्षा न हो सके, उसके नष्ट होने से रक्षक को कोई पाप नहीं लगता। राजा सिंह की बातें सुनकर लज्जित हुए फिर उससे प्रार्थना करते हुए उन्होंने बार-बार गौ के बदले उनसे अपने शरीर से तृप्ति का आग्रह किया। सिंह ने उन्हें भाँति-भाँति से प्रलोभन व नीति-वचन कहकर अपने इस निश्चय से डिगाने का प्रयत्न किया, पर वे अपने इस निर्णय पर अटल रहे। राजा के दृढ़ निश्चय को जान सिंह ने कहा—ठीक है, तब तुम मरने के लिए उद्यत हो जाओ। उसने गौ को छोड़ दिया। राजा शस्त्र त्याग कर अपना शरीर मांस-पिण्डवत् सिंह के सम्मुख प्रस्तुत किये तथा सिंह के आक्रमण की नीचे को मुँह किये प्रतीक्षा करने लगे। पर उनके विस्मय की सीमा न रही, जब उन्होंने अपने ऊपर पुष्प-वृष्टि का अनु-

भव किया। हे वत्स ! उठो, यह प्रिय वचन सुनकर जब राजा ने सिर उठाया तो वहाँ स्तनों से दुग्ध-धारा बहाती, प्रसन्नमुद्रा नन्दिनी को ही देखा। सिंह अदृश्य हो चुका था। नन्दिनी ने प्रसन्नमुद्रा में राजा से वर माँगने को कहा। राजा ने वंश की अनन्त कीर्ति को फैलाने वाला सुदक्षिणा के गर्भ से पुत्र की कामना की। नन्दिनी ने उनसे दोने में स्राव करते अपने दूध को एकत्र कर पान करने को कहा। राजा ने कहा—बछड़े के पी लेने के बाद तथा होम-विधि के लिए उपयोग के बाद जो शेष दूध बचे, उसे ही मुनि की आज्ञा से औषधि की भाँति ग्रहण करना चाहता हूँ। तत्पश्चात् वन से दोनों आश्रम लौट आये। राजा ने सारी घटना मुनि और अपनी पत्नी को सुना दी। गुरु की आज्ञा से प्रसाद ग्रहण कर अगले दिन राजा अपनी पत्नी के साथ राजधानी लौट गये।



# रघुवंश-महाकाव्यम् ( द्वितीयः सर्गः )

## संक्षिप्तकथासारः

कुलगुरोः वशिष्ठस्याज्ञया कामधेनोः दुहितां नन्दिनीं वने चारणाय राजा दिलीपः अन्यस्मिन् दिने प्रभातवेलायां दोहनानन्तरं मुमोच। प्रस्थानकाले दिलीपभार्यया सुदक्षिणया नन्दिनी माल्यादिभिः सत्कृता। कियद्दूरं वनं गत्वा परिजनैः सह सुदक्षिणा राज्ञा निवर्तिता। वने दिलीपः छाया इव सिषेवे। सायं-काले वनात् प्रत्यावर्तने सुदक्षिणा पुनः नन्दिनीं गन्धादिभिः समभ्यर्चत। एवं विधं सेवापरस्य दिलीपस्य त्रिसप्तदिनानि व्यतीतानि। अपरस्मिन् कस्मिंश्चिद्दिने सा नन्दिनी राज्ञः सेवाभावं परीक्षितुं गंगाप्रपातान्तं गौरीगुरोर्गह्वरं प्रविष्टा। तत्र नैसर्गिकीं सुषमां विलोकने दत्तचित्ते अनवधाने दिलीपे एकः सिंहः नन्दिनीं आक्रामत। आक्रान्ता नन्दिनी रक्षार्थं आर्तस्वरेण दिलीपं आकारयामास। तं आक्रन्दनं श्रुत्वा दिलीपः यदा नन्दिनीं सिंहेनाक्रान्ताम् अपश्यत् तदा तस्य

क्रोधाब्धिः पारावारं न लभत। स तस्य सिंहस्य वधाय स्वनिषङ्गाद् बाणान् उद्धर्तुमियेष। परन्तु किमिदं महदाश्चर्यम् ? राज्ञः अङ्गुल्यः बाणपुच्छे एव सक्ताः अभवन्। बाहुस्तम्भेन विवृद्धमन्युं तं भूपतिं अत्यधिकं विस्मापयन् मनुष्यवाचा प्रत्यवदत्—भो राजन्! अस्य भवान्या पुत्रीकृतस्य देवदारुविटपस्य रक्षकः भूतभावनस्य शिवस्य अनुचरः अहम् अस्मि। अत्र समीपागतः सत्त्व एव ममाहारः तेन निर्धारितः। परमेश्वरेण निर्दिष्टा इयं गौः मम भोजनवेलायां समुपस्थिता। अत एव क्रोधं लज्जां च विहाय त्वं निवर्तस्व। शस्त्रेण यदरक्ष्यं तस्य हानौ पापो न भवति रक्षकम्। एवंविधं सिंहस्य नीतिवचनं श्रुत्वा स्वस्य सामर्थ्यवैकल्यं च विचार्य दिलीपः भृशं लज्जामनुभवत। ततः कातरस्वरेण वारं वारं गवां शरीरं विहाय स्वस्य शरीरेण क्षुधातृप्तिहेतवे सिंहं निमन्त्रितवान्। सिंहः तम् अनेकैः नीतिवचनैः सम्बोधयत् तथापि दिलीपः स्वनिर्णयात् पदमेकमपि न प्राविचलत्। तदा सिंहस्तस्य प्रार्थनां 'तथास्तु' इति कथयन् स्वीकृत्य गां स्वबन्धाद् मुमोच। सिंहस्य आक्रमणस्य प्रतीक्षायां पिण्डीकृतगात्रः अधोमुखः राजा स्वोपरि पुष्पवर्षां अनुभूय, 'वत्स उत्तिष्ठ' इति सुमधुरं वचनं श्रुत्वा च विस्मितो राजा यदा ऊर्ध्वमुखः सन् गां व्यलोकयत् तदा तत्र न कोऽपि सिंहः आसीत्। स्तनैः अमृततुल्यं स्रवद्दुग्धधारा नन्दिनी प्रसन्नदृष्ट्या तम् अवलोकयन्ती तं वरयाचनार्थं प्रार्थितवती। तदा तस्याः प्रसन्नमुद्रां विलोक्य वंशस्यानन्तकीर्तिविस्तारकं पुत्रं सुदक्षिणाया उदरेण याचयामास। राज्ञः वचः श्रुत्वा सा धेनुः स्रवन्तं दुग्धं पत्रपुटके गृहीत्वा पानाय निमन्त्रयत्। राजा तु तत् सम्पादितमुनिहोमं पीतवत्सं दुग्धं गुरोराज्ञया औषधमिव ग्रहीतुमैच्छत्। दिलीपस्य सेवया प्रसन्नमना नन्दिनी तेन सह दिवसावसाने आश्रमं प्रत्यागता। राजा तु तत्सकलोदन्तं मुनिं स्वपत्नीं च श्रावयामास। अपरेद्युः गुरोराज्ञया प्रसादं गृहीत्वा अभीष्टसिद्धेः वरं च लब्ध्वा राजा दिलीपः सुदक्षिणया सह स्वराजधानीं निर्वर्तितः।



# रघुवंशमहाकाव्यम्

## द्वितीयः सर्गः

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥१॥

आशासु राशीभवदङ्गवल्लीभासेव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि ! त्वाम् ॥

सञ्जीविनी—अथेति । अथ निशानयनानन्तरं यशोधनः प्रजानामधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहयित्र्या प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या, तां तथोक्ताम् । पीतं पानमस्यास्तीति पीतः पीतवानित्यर्थः । 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः । 'पीता गावो भुक्ता ब्राह्मणाः' इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धो वत्सो यस्यास्तामृषेर्धेनुं वनाय वनं गन्तुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इत्यनेन चतुर्थी । मुमोच मुक्तवान् । जायापदसामर्थ्यात्सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसन्धेयम् । तथा हि श्रुतिः—'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः ॥' इति । यशोधन इत्यनेन पुत्रवत्ताकीर्तिलोभाद्राजानर्हे गोरक्षणे प्रवृत्त इति गम्यते । अस्मिन्सर्गे वृत्तमुपजातिः—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' ।

स्निग्धजीमूतसच्छायो दण्डकावासिशेवधिः ।
ससीतालक्ष्मणो रामो भूयान्मे चित्तमन्दिरः ॥
रघुवंशस्याद्यसर्गं व्याख्याय विरतो बुधः ।
अन्तगामित्वभारं तं धत्ते कैशोरनोदनात् ॥
गुरुस्वामिपादांस्तान् दामोदरपदाञ्चितान् ।
नत्वा प्रवर्तते ह्यत्र, आचार्याख्यो जितेन्द्रियः ॥

अन्वयः—अथ यशोधनः प्रजानाम् अधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्यां पीतप्रतिबद्धवत्साम् ऋषेः धेनुं वनाय मुमोच ।

वाच्यपरि०—यशोधनेन प्रजानामधिपेन जायाप्रतिग्राहितगन्धमाल्या पीतप्रतिबद्धवत्सा ऋषेर्धेनुर्वनाय मुमुचे । ( कर्म० )

चन्द्रिका—अथ निशात्ययानन्तरं यशः कीर्तिरेव धनं वित्तं यस्य तादृशः,

'कीर्तिर्हि महतां धनम्' इत्युक्तेः, प्रजानां जनानाम्, अधिपः स्वामी, प्रभाते प्रातः समये, जायया ( प्रयोजककर्त्र्या ) सुदक्षिणया, प्रतिग्राहिते स्वीकारिते गन्धमाल्ये चन्दनमाले,यया ( प्रयोज्यकर्त्र्या धेन्वा ) ताम् । पीतमस्यास्तीति पीतः, ( अन्यथा वत्सस्य पानकर्मत्वासम्भवात्, पीतमित्यत्र भावे क्तः, न तु कर्मणि-कर्मणोऽविवक्षणात् ) प्रतिबद्धः नियन्त्रितः वत्सः तर्णकः यस्याः सा तादृशीम् । ऋषेः वशिष्ठमुनेः धेनुं गां नन्दिनीम्, वनाय विपिनाय, मुमोच बन्धाद् मुक्तवान् । राजा दिलीपः जायापूजितां नन्दिनीं गोसेवार्थं वनं नेतुं वत्सं पीतदुग्धं बद्ध्वा बन्धनात् पृथक् कृतवान् इति भावः ।

समासः—यश एव धनं यस्य सः यशोधनः ( बहुव्रीहि० ) गन्धश्च माल्यञ्च गन्धमाल्ये; ( द्वन्द्व० ) जायया प्रतिग्राहिते गन्धमाल्ये यथा (यस्या वा) सा जाया-प्रतिग्राहितगन्धमाल्या ( बहु० ) तां जायाप्रतिग्राहितगन्धमाल्याम । पीतमस्यास्तीति पीतः, पीतः प्रतिबद्धः वत्सो यस्याः सा ( बहु० ), तां पीतप्रतिबद्धवत्साम् ।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति । 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि । प्रभातञ्च' । 'प्रजा स्यात् सन्ततौ जने' । 'प्रभुः परिवृढो-ऽधिपः' । 'भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।' 'माल्यं माला स्रजो मूर्ध्नि' । 'यशः कीर्तिः समज्ञा च' । 'धेनुः स्यान्नवसूतिका' इति चामराः ।

भावार्थः—प्रभातानन्तरं राजा दिलीपः सुदक्षिणया गन्धमाल्यादिभिः अर्चितां, वत्सं दुग्धं पाययित्वा बद्ध्वा च, वशिष्ठस्य गां नन्दिनीं स्वेन सः अरण्यगमनार्थं मुक्तवान् इति भावः ।

हिन्दीव्याख्यार्थः—रात के बीतने पर प्रातः काल प्रजा के स्वामी, कीर्ति को ही धन मानने वाले, राजा दिलीप ने पत्नी सुदक्षिणा के द्वारा पूजन में स्वीकार कराये गये चन्दन तथा माला को धारण की हुई, दूध पी चुकने के अनन्तर जिसका बछड़ा बाँध दिया गया है, ऐसी ऋषि वशिष्ठ की (नवप्रसूता) गौ नन्दिनी को जंगल में चरने के लिए खोल दिया ॥ १ ॥

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥२॥

सञ्जीविनी—तस्या इति । पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः । 'स्वैरिणी पांसुला' इत्यमरः । 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः । अपांसुलानां पतिव्रतानां धुर्यग्रे कीर्तनीया परिगणनीया । मनुष्येश्वरधर्मपत्नी । खुरन्यासैः पवित्राः पांसवो यस्य तम् । 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः । तस्या धेनोर्मार्गम् । स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदवाक्यस्यार्थमभिधेयमिव अन्वगच्छदनुसृतवती च । यथा स्मृतिः—श्रुतिक्षुण्णमेवार्थमनुसरति तथा साऽपि गोखुरक्षुण्णमेव मार्गमनु-ससारेत्यर्थः । धर्मपत्नीत्यत्राश्वघासादिवत्तादर्थ्ये षष्ठीसमासः प्रकृतिविकाराभावात्' पांसुलपथप्रवृत्तावप्यपांसुलानामिति विरोधालङ्कारो ध्वन्यते ।

अन्वयः—अपांसुलानां धुरि कीर्तनीया मनुष्येश्वरधर्मपत्नी खुरन्यासपवित्रपांसुं तस्याः मार्गं स्मृतिः श्रुतेः अर्थमिवान्वगच्छत् ।

वाच्यपरि०—कीर्तनीयया मनुष्येश्वरधर्मपत्न्या खुरन्यासपवित्रपांसुर्मार्गः स्मृत्या श्रुतेः अर्थं इवान्वगम्यत । ( कर्म० )

चन्द्रिका—अपांसुलानां निर्दोषाणाम्, पतिव्रतानामिति यावत्, धुरि अग्रे, कीर्तनीया वर्णनीया, मनुष्येश्वरस्य नृपतेः, धर्मपत्नी धर्माचरणार्थं परिगृहीता भार्या, खुराणां शफानां, न्यासेन निक्षेपेण, पवित्राः पूताः पांसवः धूलयः, यस्य तं तथोक्तम् । तस्याः नन्दिन्याः, मार्गं पन्थानं, स्मृतिः धर्मसंहिता, मन्वादिधर्मशास्त्रमिति यावत्. श्रुतेः वेदस्य, अर्थं प्रतिपाद्यम्, इव यथा, अन्वगच्छत् अन्वसरत् । सुदक्षिणा धेनोः नन्दिन्याः मार्गं तथैव अनुसृतवती यथा स्मृतिः वेदस्य अर्थम् अनुसरति । सुदक्षिणा स्मृत्योः, धेनोः श्रुतेश्च, मार्गस्य अर्थस्य च उपमा वर्णिता ।

समासः—खुराणां न्यासाः खुरन्यासाः ( ष० तत्पु० ), खुरन्यासैः पवित्राः पांसवो यस्य सः ( बहु० ), खुरन्यासपवित्रपांसुः, तम् खुरन्यासपवित्रपांसुम् । पांसवः ( पापानि ) सन्त्यासामिति पांसुलाः, न पांसुलाः अपांसुलाः ( नञ्तत्पु० ) तासाम् अपांसुलानाम् । धर्मस्य पत्नी धर्मपत्नी मनुष्याणाम् ईश्वरः मनुष्येश्वरः, मनुष्येश्वरस्य धर्मपत्नी ( ष० त० ) मनुष्येश्वरधर्मपत्नी ।

कोशः—'शफं क्लीबे खुरः पुमान्' 'पवित्रः प्रयतः पूतः' 'स्वैरिणी पांसुला च स्याद्' 'श्रुतिः स्त्री वेद आम्नायः' 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' 'स्मृतिस्तु धर्मसंहिता' इति चामरः ।

भावार्थः—पतिव्रतासु अग्रगण्या राज्ञा दिलीपस्य भार्या सुदक्षिणा यथा मन्वादिस्मृतिः श्रुतेरर्थम् अनुसरति तथैव नन्दिन्याः खुरनिक्षेपैः पवित्रधूलिं मार्गम् अनुसृतवतीति भावः ।

हिन्दीश्लोकार्थः—पतिव्रताओं में अग्रगण्य राजा दिलीप की धर्मपत्नी सुदक्षिणा ने नन्दिनी के खुरों के रखने से पवित्र धूलि वाले मार्ग का उसी प्रकार अनुगमन किया जैसे मनु-पराशरादि स्मृति वेद के अर्थ का अनुगमन करती है।।२।।

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ।।३।।

सञ्जीविनी—निवर्त्येति । दयालुः कारुणिकः । 'स्याद्दयालुः कारुणिकः' इत्यमरः । 'स्पृहिगृहि०' इत्यादिनाऽऽलुच्प्रत्ययः । यशोभिः सुरभिर्मनोज्ञः । 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः । राजा तां दयितां निवर्त्य सौरभेयीं कामधेनुसुतां नन्दिनीम् । धरन्तीति धराः । पचाद्यच् । पयसां धराः पयोधराः स्तनाः । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः । अभूततद्भावे च्विः । 'कुगतिप्रादयः' इति समासः । पयोधरीभूताश्चत्वारः समुद्रा यस्यास्ताम् । 'अनेकमन्यपदार्थे' इत्यनेकपदार्थग्रहणसामर्थ्यात्त्रिपदो बहुव्रीहिः । गोरूपधरा-

मुर्वीमिव जुगोप ररक्ष। भूरक्षणप्रयत्नेनैव ररक्षेति भावः। धेनुपक्षे—पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्राः यस्याः सा तथोक्ताम्। दुग्धतिरस्कृतसागरामित्यर्थः।

अन्वयः—दयालुः यशोभिः सुरभिः राजा तां दयितां निवर्त्य सौरभेयीं पयोधरीभूतचतुःसमुद्रां गोरूपधराम् उर्वीम् इव जुगोप।

वाच्यपरि०—दयालुना यशोभिः सुरभिणा राज्ञा सा सौरभेयी पयोधरीभूतचतुःसमुद्रा गोरूपधरा उर्वीव जुगुपे। (कर्म०)

चन्द्रिका—दयालुः कृपावान्, परदुःखासहिष्णुरिति भावः, यशोभिः कीर्तिभिः, सुरभिः मनोरमः, राजा दिलीपः, तां पूर्वपद्यकथिताम्, नन्दिनीम् अनुसरन्तीमिति यावत्, दयितां प्रियाम्, निवर्त्य परावर्त्य, आश्रमं सम्प्रेष्येति भावः, सौरभेयीं कामधेनुपुत्रीं नन्दिनीम्, पयोधरीभूता स्तनाः सम्पद्यमानाः, चत्वारः वेदसंख्यकाः, समुद्राः सागराः, यस्याः ताम्, गोरूपधरां धेनुरूपधारिणीम्, उर्वीम् इव धरां यथा, जुगोप ररक्ष। नन्दिनीपक्षे--क्षीरेणाधरीभूताः न्यूनीभूताः, चतुःसमुद्राः यस्यास्ताम्। चतुस्समुद्राधिकदुग्धवत्त्वात् चतुरोऽपि सागरान् अवरान् करोति नन्दिनीति भावः। दयालुरिति विशेषणं दयितानिवर्तने हेतुरिति काव्यलिङ्गमलङ्कारः।

समासः–सुरभेः (कामधेनोः) अपत्यं स्त्री सौरभेयी, तां सौरभेयीम्। धरन्तीति धराः, पयसां धराः पयोधराः, अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः, पयोधरीभूताः चत्वारः समुद्राः यस्याः सा पयोधरीभूतचतुःसमुद्रा, तां पयोधरीभूतचतुःसमुद्राम्। नन्दिनीपक्षे-अनधराः अधराः सम्पद्यमानाः अधरीभूताः, पयसा अधरीभूताः चत्वारः समुद्राः यस्याः सा (बहु०) पयोधरीभूतचतुस्समुद्रा, ताम्। धरतीति धरा, गोः रूपस्य धरा गोरूपधरा, ताम्।

कोशः—'दयितं वल्लभं प्रियम्' 'माहेयी सौरभेयी गौः' 'वसुधोर्वी वसुन्धरा' 'वा यथा तथैवैवम्' 'पयः क्षीरं पयोऽम्बु च' 'समुद्रोऽब्धिरकूपारः' 'स्याद् दयालुः कारुणिकः' 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः।

भावार्थः—राजा दिलीपः सुकुमारीं सुदक्षिणाम् आश्रमं परावर्त्य नन्दिनीं गोरूपधारिणीं चतुःसमुद्रान्तां पृथिवीं यथा सावधानेन मनसा रक्षति तथा रक्षितवानिति भावः। सावधानता स्पष्टीभविष्यत्यग्रेतनश्लोकेषु।

हिन्दीश्लोकार्थः—दयालु एवं कीर्ति से सुप्रसिद्ध राजा दिलीप प्रिय सुदक्षिणा को वापस भेजकर, दूध की अधिकता से जिसने समुद्र को भी तिरस्कृत किया है—ऐसी उस नन्दिनी को, चारों समुद्रों को चार स्तनों के रूप में धारण की हुई गो के रूप धारण करने वाली भूमि की भाँति, बड़ी सावधानी से, रक्षा करने लगे ॥ ३ ॥

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥४॥

सञ्जीविनी—व्रतायेति। व्रताय धेनोरनुचरेण न तु जीवनायेति भावः। तेन

दिलीपेन शेषोऽवशिष्टोऽप्यनुयायिवर्गोऽनुचरवर्गो न्यषेधि निर्वर्तितः। शेषत्वं सुदक्षिणापेक्षया। कथं तर्ह्यात्मरक्षणमत आह—न चेति। तस्य दिलीपस्य शरीररक्षा चान्यतः पुरुषान्तरान्न। कुतः हि यस्मात्कारणान्मनोः प्रसूयत इति प्रसूतिः सन्ततिः स्ववीर्यगुप्ता स्ववीर्येणैव रक्षिता। न हि स्वनिर्वाहकस्य परापेक्षेति भावः।

अन्वयः—व्रताय धेनोः अनुचरेण तेन शेषोऽपि अनुयायिवर्गः न्यषेधि, तस्य शरीररक्षा च अन्यतः न। हि मनोः प्रसूतिः स्ववीर्यगुप्ता 'भवतीति शेषः'।

वाच्य०—व्रताय धेनोः अनुचरः स शेषमप्यनुयायिवर्गं न्यषेधीत् ( कर्तृ० )। मनोः प्रसूत्या स्ववीर्यगुप्तया 'भूयते' इति शेषः। ( भाव० )

चन्द्रिका—व्रताय नियमाय, धेनोः नन्दिन्याः, अनुचरेण सेवकेन, तेन दिलीपेन, शेषोऽपि सुदक्षिणातिरिक्तोऽपि, अनुयायिनाम् अनुचराणां वर्गः वृन्दम्, न्यषेधि न्यवर्त्ति, परावर्तित इत्यर्थः। तर्हि तस्य शरीररक्षा कथं भवेत्? इत्याह—तस्य दिलीपस्य शरीररक्षा देहपालनम्, च तु, अन्यतः भृत्यादितः, न नैव भवति। हि यस्मात्, मनोः वैवस्वतनामकमनोः, प्रसूतिः सन्ततिः, मनुवंशोद्भूताः सर्वेऽपि राजान इति भावः, स्ववीर्येण निजपराक्रमेण, गुप्ता रक्षिता। भवतीति शेषः। अर्थान्तरन्यासालङ्कारः, सामान्येन विशेषस्य समर्थनात्।

समासः—अनु ( पश्चात् ) चरतीत्यनुचरः, तेन। अनु ( पश्चाद् ) यान्तीत्यनुयायिनः, अनुयायिनां वर्गः अनुयायिवर्गः (ष. त.)। शरीरस्य रक्षा शरीररक्षा (ष. त.)। स्वस्य वीर्यं स्ववीर्यम्, स्ववीर्येण गुप्ता स्ववीर्यगुप्ता। ( तृ. त. )

कोशः—'नियमो व्रतमस्त्री' 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः।' इति चामरः। 'धेनुर्गोमात्रके दोग्ध्र्याम्' इति मेदिनी। 'वीर्यं बले प्रभावे च' इत्यमरः। 'प्रसूतिः प्रसवोत्पत्तिपुत्रेषु दुहितर्यपि' इति नानार्थार्णवः।

भावार्थः—नियमानुष्ठानेषु भृत्यादीनाम् उपयोगोऽनुचितः, सर्वं स्वयमेव कर्तव्यमिति विचार्य दिलीपः अन्यानपि अनुचरान् आश्रमं परावर्तितवान्। तस्य शरीररक्षार्थं नान्यस्य आवश्यकता। मनुवंशीयाः सर्वेऽपि निजपराक्रमेणैव रक्षिता इति भावः।

हिन्दीश्लोकार्थः—गोसेवारूपी नियम पालन करने के लिए नन्दिनी के अनुचर राजा दिलीप द्वारा सुदक्षिणा को लौटाने के बाद बचे नौकर भी लौटा दिये गये। उनको अपनी शरार की रक्षा करने के लिए दूसरे की आवश्यकता नहीं थी, क्योंकि वैवस्वत मनु के वंश में उत्पन्न राजा लोग अपने ही बल से रक्षित थे॥ ४॥

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत्॥५॥

सञ्जीविनी—आस्वादवद्भिरिति। सम्राण्मण्डलेश्वरः। 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः। स राजा

आस्वादवद्भिः रसवद्भिः स्वादयुक्तैरित्यर्थः। तृणानां कवलैर्ग्रासैः 'ग्रासस्तु कवलः पुमान्' इत्यमरः। कण्डूयनैः खर्जनैः। दंशानां वनमक्षिकाणां निवारणैः। 'दंशस्तु वनमक्षिका' इत्यमरः। अव्याहतैरप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च। तस्या धेन्वाः समाराधनतत्परः शुश्रूषाऽऽसक्तोऽभूत्। तदेव परं प्रधानं यस्येति तत्परः। 'तत्परे प्रसितासक्तौ' इत्यमरः।

अन्वयः—सम्राट् सः आस्वादवद्भिः तृणानां कवलैः कण्डूयनैः दंशनिवारणैः अव्याहतैः स्वैरगतैश्च तस्याः समाराधनतत्परः अभूत्।

वाच्य०—सम्राजा तेन तस्याः समराधनतत्परेणाभावि। ( भाव० )

चन्द्रिका—सम्राट् चक्रवर्ती, सः दिलीपः, आस्वादवद्भिः स्वादसम्पन्नैः, रुचिकरैरित्यर्थः, तृणानां घासानां, कवलैः ग्रासैः, कण्डूयनैः गात्रखर्जनैः, दंशानां वनमक्षिकाणाम्, निवारणैः पद्रावणैः, अपसारणैरिति यावत्। अव्याहतैः अनिरुद्धैः, स्वैरगतैः स्वच्छन्दगमनैश्च, तस्याः नन्दिन्याः, समाराधने सेवायाम्, तत्परः आसक्तः अभूत् जातः। गोहितकराणि कार्याणि कुर्वन् अखण्डभूमण्डलाधिपतिः दिलीपः नन्दिनीसेवासक्तो बभूवेति भावः।

समासः—आस्वादः अस्ति एषु ( कवलेषु ) ते आस्वादवन्तः, तैः आस्वादवद्भिः। दंशानां निवारणानि दंशनिवारणानि ( ष. त. ), तैः दंशनिवारणैः। न व्याहतानि अव्याहतानि ( नञ्तत्पु० ), तैः अव्याहतैः। स्वैरं यथा तथा ( क्रियाविशेषणम् ) गतानि स्वैरगतानि, यद्वा स्वैराणि च तानि गतानि च स्वैरगतानि ( कर्म० ), तैः स्वैरगतैः। समाराधने तत्परः ( तत् परं यस्येति बहु० ) समाराधनतत्परः ( स० तत्पु० )।

कोशः—'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्' 'ग्रासस्तु कवलः पुमान्' 'दंशस्तु वनमक्षिका' 'तत्परे प्रसितासक्तौ' 'मन्दस्वच्छन्दयोः स्वैरः' 'आराधनं साधने स्यादवाप्तौ तोषणेऽपि च' इति चामराः।

भावार्थः—चक्रवर्ती दिलीपः स्वहस्तेन नूतनतृणान्यानीय धेनुं भोजयति स्म, वनमक्षिका या नन्दिन्युपरि उपवेष्टुम् आगच्छन् ता वारयति स्म, शनैः शनैः नन्दिन्याः शरीरं खर्जति स्म, स्वेच्छया गमनं न वारयति स्म। एवं नन्दिन्याः शुश्रूषायां संलग्न आसीदिति भावः।

हिन्दीश्लोकार्थः—चक्रवर्ती दिलीप स्वाद से युक्त घासों के ग्रासों से, शरीर खुजलाने से, मच्छरों के उड़ाने से और बेरोक घूमने देने से उस नन्दिनी की सेवा में आसक्त थे।

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥६॥

सञ्जीविनी—भूपतिस्तां गां स्थितां सतीं स्थितः सन्। स्थितिरूर्ध्वावस्थानम्। प्रयातां प्रस्थितामुच्चलितः प्रस्थितः। निषेदुषीं निषण्णाम्। उपविष्टामित्यर्थः।

भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः। 'उगितश्च' इति ङीप्। आसनबन्ध उपवेशने धीरः। स्थित उपविष्टः सन्नित्यर्थः। जलमाददानां जलं पिबन्तीं जलाभिलाषी जलं पिबन्नित्यर्थः। इत्थं छायेवान्वगच्छदनुसृतवान्।

अन्वयः—भूपतिः तां स्थितां स्थितः 'सन्' प्रयाताम् उच्चलितः 'सन्' निषेदुषीम् आसनबन्धधीरः 'सन्' जलम् आददानाम् जलाभिलाषी 'सन्' छायेव ताम् अन्वगच्छत्।

वाच्य०—भूपतिना सा स्थिता स्थितेन, प्रयाता उच्चलितेन, निषेदुषी आसनबन्धधीरेण, जलम् आददाना जलाभिलाषिणा, छाययेव अन्वगम्यत। (कर्म०)

चन्द्रिका—भूपतिः राजा दिलीपः, तां नन्दिनीम्, स्थितां निरुद्धाम्, स्थितः निरुद्धः, सन्, प्रयातां प्रचलिताम्, उच्चलितः प्रचलितः, सन् गच्छन्नित्यर्थः, निषेदुषीम् आसीनाम्, आसनबन्धे उपवेशने, धीरः स्थिरः सन्, जलं पानीयम्, आददानां गृह्णन्तीम्, पिबन्तीमिति भावः, जलाभिलाषी पानीयम् इच्छन्, सन्, जलं पिबन् इत्यर्थः, छाया इव प्रतिबिम्बं यथा, अन्वगच्छत् अन्वसरत्। नन्दिनीव सर्वं कुर्वन् तस्या अनुसरणं कृतवानिति भावः।

समासः— भुवः पतिः भूपतिः। आसनस्य बन्धः, आसनबन्धः, आसनबन्धे धीरः आसनबन्धधीरः (स० तत्पु०), आदत्ते इति आददाना (शानजन्तं), ताम् आददानाम्। जलमभिलषितुं शीलमस्यासौ जलाभिलाषी।

कोशः—'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' 'भूर्भूमिरचलानन्ता' 'धवः प्रियः पतिर्भर्ता' इति चामराः।

भावार्थः—नन्दिनीशुश्रूषायां परायणो दिलीपः सा अतिष्ठत् चेत् स्वयमपि अतिष्ठत्, सा चलति चेदयमपि चलति, सा उपविशति स्वयमप्यासीनः, सा जलं पिबति यदि अयमपि जलं पिबति—एवं तस्याः तत्परतया सेवां कृतवान्।

हिन्दीश्लोकार्थः—पृथिवीपति दिलीप ने, नन्दिनी के रुकने पर रुकते हुए, चलने पर चलते हुए, बैठने पर बैठते हुए ( बैठने के आसन में न घबराते हुए ) जल पीने पर जल पीते हुए—( इस रीति से ) छाया की भाँति नन्दिनी का अनुसरण किया ॥६॥

स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥७॥

सञ्जीविनी—स इति। न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां, तथाभूतामपि, तेजोविशेषेण प्रभावातिशयेनानुमिताम्, 'सर्वथा राजैवायं भवेदि'त्यूहितां राजलक्ष्मीं दधानः स राजा, अनाविष्कृतदानराजिर्बहिरप्रकटितमदरेखः। अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः, तथाभूतो द्विपेन्द्र इव आसीत्।

अन्वयः—न्यस्तचिह्नामपि तेजोविशेषानुमितां राजलक्ष्मीं दधानः सः अनाविष्कृतदानराजिः अन्तर्मदावस्थः द्विपेन्द्र इव आसीत्।

वाच्य०—राजलक्ष्मीं दधानेन तेन अनाविष्कृतदानराजिना अन्तर्मदावस्थेन द्विपेन्द्रेण इवाभूयत। ( भाव० )

चन्द्रिका—न्यस्तानि त्यक्तानि ( राज्ये एव ), चिह्नानि चामरादिलक्षणानि, अपि: निरोधे, तेजोविशेषेण मुखदीप्तिप्रचुरतया, विलक्षणतेजसेति यावत्। अनुमितां तर्किताम्, ( एष राजास्ति, लोकोत्तरतेजोविशेषात्, व्यतिरेकेण हालिकवत्- इत्यनुमानाकारः )। राजलक्ष्मीं नृपश्रियम् दधानः धारयन्, सः दिलीपः, अनाविष्कृता अप्रकटिता, दानराजिः मदपंक्तिः येन सः तादृशः, अन्तर्मदस्य अभ्यन्तरस्थदानस्य, अवस्था दशा यस्य सः, द्विपेन्द्रः गजराजः, इव यथा, आसीत् अभूत्।

समासः—न्यस्तानि चिह्नानि यस्याः सा न्यस्तचिह्ना, तां न्यस्तचिह्नाम् ( बहु० )। राज्ञो लक्ष्मीः ( ष० त० ) राजलक्ष्मीः, तां राजलक्ष्मीम्। तेजसः विशेषः तेजोविशेषः, तेजोविशेषेण अनुमिता तेजोविशेषानुमिता (तृती०त०), तां तेजोविशेषानुमिताम्। न आविष्कृता अनाविष्कृता, अनाविष्कृता दानस्य राजिः यस्य सः अनाविष्कृतदानराजिः ( बहु० )। मदस्य अवस्था मदावस्था, अन्तः मदावस्था यस्य सः अन्तर्मदावस्थः ( बहु० )। द्वाभ्यां पिबन्तीति द्विपाः, द्विपानाम् इन्द्रः द्विपेन्द्रः (ष० त० )।

कोशः—'कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्'। 'गण्डः कटो मदो दानम्' 'श्रेणी लेखास्तु राजयः' 'द्विरदोऽनेकपो द्विपः। मतङ्गजो गजो नागः' इति चामरः।

भावार्थः—गण्डस्थले मदजलपंक्तिम् अप्रदर्शयन् अपि गजेन्द्रः निजतेजसा 'एष अन्तर्मदो नागेन्द्रः' इति लोचकानां कल्पनां जनयति, तथैव व्रतपालनार्थं राज्य एव छत्रचामरकिरीटादिकं विहाय गतोऽपि राजा विलक्षणतेजसा 'एष नूनं चक्रवर्ती' इति लोकैः अनुमीयते स्म।

हिन्दीश्लोकार्थः—छत्र-चामर-मुकुटादि राजचिह्नों से रहित होने पर भी असाधारण मुखदीप्ति से 'यह निश्चय ही राजा है, असाधारण तेज होनेके कारण' इस प्रकार जिसकी राजलक्ष्मी अनुमान से जानी गई, वह दिलीप, बाहर मदधारा न बहने पर भी भीतर मदरेखा है जिसकी, ऐसे गजराज की भाँति जान पड़ते थे ॥७॥

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥८॥

सञ्जीविनी—लतेति। लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिता ये केशास्तैरुपलक्षितः। 'इत्थम्भूतलक्षणे' इति तृतीया। स राजा अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा सन्। 'धनुषश्च' इत्यनङादेशः। मुनिहोमधेनो रक्षापदेशाद्रक्षणव्याजात्। वन्यान् वने भवान् दुष्टसत्त्वान् दुष्टजन्तून् 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः। विनेष्यन् शिक्षयिष्यन्निव

दावं वनम् । 'वने च वनवह्नौ च दावो दव इहेष्यते' इति यादवः । विचचार वने चचारेत्यर्थः । 'देशकालाध्वगन्तव्याः । कर्मसंज्ञा ह्यकर्मणाम्' इति दावस्य कर्मत्वम् ।

अन्वयः—लताप्रतानोद्ग्रथितैः केशैः ( उपलक्षितः ) सः अधिज्यधन्वा 'सन्' मुनिहोमधेनोः रक्षापदेशात् वन्यान् दुष्टसत्त्वान् विनेष्यन् इव दावं विचचार ।

वाच्य०—तेन अधिज्यधन्वना सता दुष्टसत्त्वान् विनेष्यता इव दावो विचेरे । (कर्म० ) ।

चन्द्रिका—लतानां वल्लीनां, प्रतानेन कुटिलतन्तुना, उद्ग्रथितैः उन्नमय्य बद्धैः, केशैः कचैः, ( उपलक्षितः युक्तः ) अनेन सन्नद्धता कथिता । सः दिलीपः, अधिज्यम् आरोपितगुणम्, धनुः चापः यस्यासौ सज्जधनुष्मानित्यर्थः. 'सन् भवन्' मुनिहोमधेनोः वसिष्ठहवनसाधनभूतायाः नन्दिन्याः, रक्षापदेशात् परित्राणव्याजात् वन्यान् आरण्यकान्, दुष्टसत्त्वान् क्रूरश्वापदान्, सिंहव्याघ्रादीनिति यावत्, विनेष्यन् अग्रे दण्डयिष्यन्, इव यथा, दावं वनम्, विचचार बभ्राम, वने सञ्चारमकरोदित्यर्थः ।

समासः—लतायाः प्रतानं लताप्रतानम्, लताप्रतानेन उद्ग्रथिताः लताप्रतानोद्ग्रथिताः, तैः लताप्रतानोद्ग्रथितैः । अधि ज्या यस्य तत् अधिज्यम्, अधिज्यं धनुर्यस्यासौ अधिज्यधन्वा (बहुव्रीहिगर्भबहुव्रीहिः) । होमस्य धेनुः होमधेनुः, मुनेः होमधेनुः मुनिहोमधेनुः, तस्याः मुनिहोमधेनोः । वने भवाः वन्याः, तान् वन्यान् । दुष्टाश्च ते सत्त्वाश्च दुष्टसत्त्वाः, तान् दुष्टसत्त्वान् । रक्षायाः अपदेशः रक्षापदेशः तस्मात् रक्षापदेशात् । विनेष्यतीति विनेष्यन् ।

कोशः—'वल्ली तु व्रततिर्लता' 'दवदावौ वनारण्यवह्नी' 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' । 'मौर्वी ज्या शिञ्जिनी गुणः' 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' । 'व्याजोऽपदेशो लक्ष्यञ्च' 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।' इत्यमरः ।

भावार्थः—लतातन्तुभिः केशान् उपरि नीत्वा बद्ध्वा च अधिज्यं धनुः गृहीत्वा नन्दिनीरक्षणव्याजेन चलन् राजा दुष्टसिंहादिप्राणिनां दमनं करिष्यति किम्, तदर्थमेव सञ्चरति किम् इति भाति स्मेत्युत्प्रेक्षा ।

हिन्दीश्लोकार्थः—लताओं के टेढ़-मेढ़े सूतों से इधर-उधर बिखरे सिर के बालों को ऊपर उठाकर बाँधने से शोभायमान राजा दिलीप प्रत्यञ्चा चढ़े हुए धनुष को लिये वसिष्ठमुनि के होम साधनीभूत ( घृतादि के द्वारा ) नन्दिनी की रक्षा के बहाने जंगली दुष्ट शेर-भालू आदि जानवरों को मानों दण्ड देने के लिए जंगल में घूम रहे थे ॥ ८ ॥

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥९॥

सञ्जीविनी—विसृष्टेति । विसृष्टाः पार्श्वानुचराः पार्श्ववर्तिनो जना येन तस्य। पाशभृता वरुणेन समस्य तुल्यस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । अनुभावोऽनेन सूचितः । तस्य राज्ञः पार्श्वयोर्द्रुमाः । उन्मदानामुत्कटमदानां वयसां खगानाम् । 'खगबाल्यादिनोर्वयः' इत्यमरः । विरावैः शब्दैः । आलोकस्य शब्दं वाचकमालोकयेति शब्दं जयशब्दमित्यर्थः । 'आलोको जयशब्दः स्याद्' इति विश्वः । उदीरयामासुरिवावदन्निव, इत्युत्प्रेक्षा ।

अन्वयः—विसृष्टपार्श्वानुचरस्य पाशभृता समस्य तस्य पार्श्वद्रुमाः उन्मदानां वयसां विरावैः आलोक-शब्दम् उदीरयामासुरिव ।

वाच्य०—पार्श्वद्रुमैः तस्य आलोक-शब्द उदीरयाञ्चक्रे इव । ( कर्म० )

चन्द्रिका—विसृष्टाः त्यक्ताः, पार्श्वानुचराः निकटसेवकाः, येन तथोक्तेन, पाशभृता वरुणेन, समस्य तुल्यस्य, तस्य दिलीपस्य, पार्श्वद्रुमाः उभयभागस्थाः वृक्षाः, उन्मदानां माद्यताम्, हृष्टानामिति यावत् । वयसा पक्षिणाम्, विरावैः स्वनैः 'वाशित' नामभिः, 'आलोक'शब्दं जयशब्दम्, उदीरयामासुः उच्चारयामासुः,इव नूनम्, इत्युत्प्रेक्षा ।

समासः–पार्श्वयोः अनुचराः पार्श्वानुचराः ( ष०त० ), विसृष्टाः पार्श्वानुचराः येन सः (बहु० ) विसृष्टपार्श्वानुचरः, तस्य, विसृष्टपार्श्वानुचरस्य । पार्श्वयोः द्रुमाः पार्श्वद्रुमाः (ष०त० ) । पाशं बिभर्तीति पाशभृत्, तेन पाशभृता । उद्गतो मदो येषां तानि उन्मदानि, तेषाम् उन्मदानाम् ( 'वयसाम्' इत्यस्य विशेषणत्वात् नपुंसकता ) आलोकस्य शब्दः, आलोक इति शब्दो वा, आलोकशब्दः, ( आद्ये-ष०त०, द्वितीये सम्भावनापूर्वपदकर्म० ) तम् आलोकशब्दम् ।

कोशः—'पार्श्वमन्तिके, कक्षाधोवयवे चक्रोपान्तपर्शुसमूहयोः' इत्यनेकार्थ० । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ॥' 'आरवारावसंरावविरावा अथ मर्मरः ।' 'हर्षेऽप्यामोदवन्मदः' इति चामराः । 'खगबाल्यादिनोर्वयः' इति नानार्थेऽमरः ।

भावार्थः—अनुचरान् विहाय एकाकितया सञ्चरतोऽपि तेजसा वरुणसमानस्य दिलीपस्य उभयपार्श्वस्था वृक्षाः हृष्टपक्षिशब्दैः जय-जय इति जयकारम् अकुर्वन् किमिति भावः ।

हिन्दीश्लोकार्थः—अगल-बगल के नौकरों को छोड़कर अकेले विचरने वाले वरुणदेव के समान तेजस्वी राजा दिलीप को उभयपार्श्व के वृक्षों ने अत्यन्त मतवाले पक्षियों के शब्दों से मानो 'जय' शब्द का उच्चारण किया ॥ ९ ॥

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्त्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥१०॥

सञ्जीविनी—मरुत्प्रयुक्ताश्चेति । मरुत्प्रयुक्ता वायुना प्रेरिताः, बाललताः, आरात्समीपेऽभिवर्त्तमानम् 'आराद् दूरसमीपयोः' इत्यमरः । मरुतो वायोः सखा

मरुत्सखोऽग्निः। स इवाभातीति मरुत्सखाभम्। 'आतश्चोपसर्गे' इति कप्रत्ययः। अर्च्यं पूज्यं तं दिलीपं प्रसूनैः पुष्पैः। पौरकन्याः पौराश्च ताः कन्या आचारार्था लाजास्तैराचारलाजैरिव। अवाकिरन् तस्योपरि निक्षिप्तवत्य इत्यर्थः। सखा हि सखायमागतमुपचरतीति भावः।

अन्वयः—मरुत्प्रयुक्ताः बाललताः आराद् अभिवर्तमानं मरुत्सखाभम् अर्च्यं तं प्रसूनैः पौरकन्याः आचारलाजैः इव अवाकिरन्।

वाच्य०—मरुत्प्रयुक्ताभिः लताभिः अभिवर्तमानो मरुत्सखाभः अर्च्यः सः प्रसूनैः पौरकन्याभिरिव अवाकीर्यत। ( कर्म० )

चन्द्रिका—मरुता वायुना, प्रयुक्ताः कम्पिताः, बाललताः अचिरोत्पन्ना व्रततयः, आरात् समीपे, अभिवर्तमानं विद्यमानम्, मरुतः पवनस्य, सखा मित्रं, अग्निरिति भावः, मरुत्सखः अग्निः, इव यथा, आभाति भासते इति तथोक्तः, तं मरुत्सखाभं, आचारलाजैः अग्निसदृशम्, अर्च्यं पूज्यम्, तं दिलीपं, प्रसूनैः कुसुमैः, पौरकन्याः नागरिककुमार्यः, मङ्गलार्थं भर्जितधान्यैः, इव यथा, अवाकिरन् अवर्षन्। बाललताः पवननोदिताः अग्निसदृशे तस्मिन् दिलीपे पुष्पाणि ववृषुरित्यर्थः।

समासः—मरुता प्रयुक्ताः मरुत्प्रयुक्ताः ( तृ० त० )। बालाश्च ताः लताश्च बाललताः (कर्म०)। मरुतः सखा मरुत्सखः, मरुत्सख इव आभातीति मरुत्सखाभः। मरुत्सखस्य आभेव आभा यस्येति (बहु०) वा। अर्चितुं योग्यः अर्च्यः, तम् अर्च्यम्। पुरे भवाः पौराः, पौराश्च ताः कन्याश्च ( कर्म० ) पौरकन्याः। आचारार्था लाजाः आचारलाजाः ( मध्यमपदलोपी ), तैः आचारलाजैः।

कोशः—'समीरमारुतमरुत्' 'वल्ली तु व्रततिर्लता' 'रोहिताश्वो वायुसखः' 'अथ मित्रं सखा सुहृत्' 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' लाजाः पुंभूम्नि चाक्षताः' इति यथायथममराः।

भावार्थः—पूजार्हं तेजसा पावकसदृशं सन्निहितं दिलीपं वायुकम्पिता बाललताः यथा नगरे कन्यकाः मङ्गलार्थं लाजान् वर्षन्ति तथा पुष्पाणि ववृषुः। वायुः निजसख ( अग्नि ) सदृशं विलोक्य लताः संप्रेर्य मित्रस्य ( मित्रसदृशस्य ) सत्कारमाचरत् इति ध्वनिः।

हिन्दीश्लोकार्थः—वायु से प्रेरित अर्थात् कंपाई गई कोमल लताओं ने अग्नि-सदृश ( तेजस्वी ), पास में सन्निहित, पूजा के योग्य दिलीप के ऊपर पुष्पों की वर्षा की, जैसे कि—नागरिक बालिकायें मंगलार्थ धान के लावों की वर्षा करती हैं॥ १० ॥

धनुर्भृतोऽप्यस्य दयाऽऽर्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः॥११॥

सञ्जीविनी—धनुर्भृत इति। धनुर्भृतोऽप्यस्य राज्ञः। एतेन भयसम्भावना दर्शिता। तथाऽपि विशङ्कैर्निर्भीकैरन्तःकरणैः कर्तृभिः। दयया कृपारसेनार्द्रो

भावोऽभिप्रायो यस्य तद्दयाऽऽर्द्रभावं तदाख्यातम् । दयाऽऽर्द्रभावमेतदित्याख्यातमित्यर्थः । 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु' इत्यमरः । तथाविधं वपुर्विलोकयन्त्यो हरिण्योऽक्ष्णां प्रकामविस्तारस्यात्यन्तविशालतायाः फलमापुः । 'विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं च ।' इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादेव विश्रब्धं ददृशुरित्यर्थः ।

अन्वयः—धनुर्भृतोऽपि अस्य विशङ्कैः अन्तःकरणैः दयार्द्रभावम् आख्यातं वपुः विलोकयन्त्यः हरिण्यः अक्ष्णां प्रकामविस्तारफलम् आपुः ।

वाच्य०—धनुर्भृतोऽपि अस्य वपुः विलोकयन्तीभिः हरिणीभिः अक्ष्णां प्रकामविस्तारफलम् आपे । ( कर्म० ) ।

चन्द्रिका—धनुर्भृतः चापधारिणः, अपिर्विरोधे, अस्य दिलीपस्य । 'अस्य' त्यस्य तृतीयपादस्थ-'वपु'-रित्यनेन सम्बन्धः । धनुर्धारिणं दृष्ट्वा साधारणतो भयं जायते परमत्र दिलीपविषये—विशङ्कैः भयातङ्करहितैः, चित्तैः, हरिणीनां चित्तानि विशङ्कानि सन्ति धनुर्धारिणमपि दिलीपमवलोक्येति भावः । दयया कृपाभावेन, आर्द्रः पूर्णः, भावः अभिप्रायः, यस्य तद् दयार्द्रभावम् ( इदं दिलीपस्य वपुः ) आख्यातम् उक्तम् । हरिणीचित्तैः 'इदं वपुः दयार्द्रभावमिति' गदितमिति भावः । वपुः दिलीपशरीरं, विलोकयन्त्यः हरिण्यः मृग्यः, अक्ष्णां नयनानां, विस्तारस्य विपुलतायाः, फलं प्रयोजनम्, आपुः लेभिरे ।

समासः—धनुः बिभर्तीति धनुर्भृत्, तस्य धनुर्भृतः दयया आर्द्रो भावो यस्य तत् दयार्द्रभावं ( बहु० ), तत् दयार्द्रभावम् । अन्तःस्थानि च तानि करणानि च अन्तःकरणानि ( मध्यमपदलोपी ) तैः अन्तःकरणैः । विगता शङ्का येभ्यस्तानि ( बहु० ) विशङ्कानि, तैः विशङ्कैः । प्रकामं विस्तारः प्रकामविस्तारः, प्रकामविस्तारस्य फलं प्रकामविस्तारफलम् ( ष० त० ), तत् प्रकामविस्तारफलम् । विलोकयन्तीति विलोकयन्त्यः ।

कोशः—'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' 'कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपि' इत्यमरौ । 'शङ्का भये संशये च' इत्यनेकार्थ० । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । दृग्दृष्टी' 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।' इत्यमरः ।

भावार्थः—राजा दिलीपो धनुर्धरत्वात् भयप्रद आसीत्, किन्तु हरिणीनां मनस्सु तं विलोक्य भयं न जातम्, प्रत्युत 'इदं दिलीपवपुः दयाभावपूर्णमस्ति' इति तासां मनांसि अकथयन् । मनः प्रसन्नं सत् 'एष सुहृत्' इति भयादिपूर्णं चेत् 'एष शत्रुः' इति सूचयति । अतो निर्भयाः स्वविशालनयनैः सुन्दरं विपुलञ्च दिलीपदेहं निर्निमेषपातं पश्यन्त्यो ( हरिण्यः ) निजनयनविपुलतायाः साफल्यं लब्धवत्यः—इति भाव।

हिन्दीश्लोकार्थः—धनुष को धारण करने पर भी, हरिणियों के अन्तःकरणों में भय नहीं उत्पन्न हुआ और अन्तःकरणों ने स्पष्ट कह दिया कि यह शरीर

(दिलीप का) दयाभावपूर्ण है, अन्तः निःशङ्क भाव से दिलीप के सुन्दर और विशाल देह को देखती हुई हरिणियों ने अपने विशालनयन होने का फल प्राप्त किया ॥११॥

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥१२॥

सञ्जीविनी—स इति । स दिलीपो मारुतपूर्णरन्ध्रैः अत एव कूजद्भिः स्वनद्भिः कीचकैर्वेणुविशेषैः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । वंशः सुषिरवाद्यविशेषः । 'वंशादिकं तु सुषिरम्' इत्यमरः । आपादितं सम्पादितं वंशस्य कृत्यं कार्यं यस्मिन्कर्मणि तत्तथा । कुञ्जेषु लतागृहेषु 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे' इत्यमरः । वनदेवताभिरुद्गीयमानमुच्चैर्गीयमानं स्वं यशः शुश्राव श्रुतवान् ।

अन्वयः—सः मारुतपूर्णरन्ध्रैः कूजद्भिः कीचकैः आपादितवंशकृत्यं 'यथा तथा' कुञ्जेषु वनदेवताभिः उच्चैः उद्गीयमानं स्वं यशः शुश्राव ।

वाच्य०—तेन वनदेवताभिः उच्चैः उद्गीयमानं स्वं यशः शुश्रुवे । (कर्म०)

चन्द्रिका—सः दिलीपः, मारुतेन वायुना, पूर्णानि संभृतानि, रन्ध्राणि छिद्राणि, येषां तैः तथोक्तः, कूजद्भिः स्वनद्भिः, शब्दं कुर्वद्भिरिति यावत्, कीचकैः वंशवृक्षैः आपादितं कृत, वंशस्य वाद्यविशेषस्य, कृत्यं कार्यं, यस्मिन् कर्मणि तद् यथा भवति तथेति गानक्रियाविशेषणम्, कुञ्जेषु लतागृहेषु, वनदेवताभिः अरण्यवासिभिः देवैः, उच्चैः तारस्वरेण, उद्गीयमानम् उच्चैः सुस्वरं सस्वरञ्च कीर्त्यमानम्, वर्ण्यमानमिति यावत्, स्वं निजं, यशः कीर्तिं, शुश्राव आकर्णयत् ।

समासः—मारुतेन पूर्णानि रन्ध्राणि येषां ते (बहु०) मारुतपूर्णरन्ध्राः, तैः मारुतपूर्णरन्ध्रैः । वंशस्य कृत्यं वंशकृत्यं, आपादितं वंशकृत्यं यस्मिन् कर्मणि तद् यथा भवति तथा (क्रियावि०) आपादितवंशकृत्यम् । वनस्य देवताः वनदेवताः, ताभिः वनदेवताभिः ।

कोश—'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । 'वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च ।' इति विश्वः । 'कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः' 'अल्पे नीचैर्महत्युच्चैः' इति, 'यशः कीर्तिः समज्ञा च' 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः ।

भावार्थः—दिलीपः सञ्चरन् लतापिहितगृहेषु वनाधिष्ठातृदेवैः उच्चैः गीयमानां निजां कीर्तिमाकर्णितवान् । तत्र पुनः सच्छिद्रैः वंशैः वायुपूरणेन स्वनद्भिः वंशवाद्यस्य कार्यं स्वरदानरूपं समाचरद्भिः पार्श्ववाद्यस्थानीया सहकारिता संपाद्यते स्मेति भावः ।

हिन्दीश्लोकार्थः—राजा दिलीप ने लता गृहों में वनकी अधिष्ठात्री देवताओं से ऊँचे स्वर में गाये जाने वाले अपने यश को सुना, जिस गान में वायु से भरे हुए छिद्र होने से बांस बाँसुरी का कार्य सम्पादित कर रहे थे ॥१२॥

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाऽऽकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥१३॥

सञ्जीविनी—पृक्त इति । गिरिषु निर्झराणां वारिप्रवाहाणाम् । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । तुषारैः सीकरैः । 'तुषारौ हिमसीकरौ' इति शाश्वतः । पृक्तः सम्पृक्तोऽनोकहानां वृक्षाणामाकम्पितानीषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीत्याकम्पितपुष्पगन्धी ईषत्कम्पितपुष्पगन्धवान्, अत एव शीतो मन्दः सुरभिः पवनो वायुरनातपत्रं व्रतार्थं परिहृतच्छत्रम् । अत एवातपक्लान्तमाचारेण पूतं शुद्धं तं नृपं सिषेवे । आचारपूतत्वात्स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः ।

अन्वयः—गिरिनिर्झराणां तुषारैः पृक्तः अनोकहाकम्पितपुष्पगन्धी पवनः अनातपत्रम् आतपक्लान्तम् आचारपूतं तं सिषेवे ।

वाच्य०—तुषारैः पृक्तेन अनोकहाकम्पितपुष्पगन्धिना पवनेन अनातपत्रः आतपक्लान्तः आचारपूतः सः सिषेवे । ( कर्म० )

चन्द्रिका—गिरेः पर्वतस्य, ये, निर्झराः वारिप्रवाहाः, तेषां तुषारैः सीकरैः, हिमजलकणैरिति यावत्, पृक्तः सम्मिश्रः, अनोकहानां तरूणाम्, आकम्पितानि ईषच्चलितानि, पुष्पाणि प्रसूनानि, तेषां यो गन्धः परिमलः, सोऽस्यास्तीति अनोकहाकम्पितपुष्पगन्धी तरूणां किञ्चिच्चलितकुसुमसौरभवान्. पवनः वायुः, अनातपत्रम् अविद्यमानच्छत्रम्, आतपेन सूर्यप्रकाशेन, क्लान्तं श्रान्तम्, आचारैः धर्मशास्त्रोक्तकृत्यैः, बाह्याभ्यन्तरशौचैरिति यावत् । पूतं पवित्रम्, तं दिलीपम्, सिषेवे पर्यचरत्, सेवितवानित्यर्थः । सर्वपावकस्यापि पवनस्य राजा सेव्योऽभूदिति भावः।

समासः—गिरेः निर्झराः गिरिनिर्झराः (ष० त०), तेषां गिरिनिर्झराणाम् । आकम्पितानि च तानि पुष्पाणि च आकम्पितपुष्पाणि ( कर्म० ), अनोकहानाम् आकम्पितपुष्पाणि अनोकहाकम्पितपुष्पाणि, अनोकहाकम्पितपुष्पाणां गन्धोऽस्यास्तीति अनोकहाकम्पितपुष्पगन्धी । आतपात् त्रायत इत्यातपत्रम्, न विद्यते आतपत्रं यस्य सः (बहु०), अनातपत्रः, तम् अनातपत्रम् । आतपेन क्लान्तः आतपक्लान्तः, तम् आतपक्लान्तम् । आचारेण पूतः आचारपूतः, तम् आचारपूतम् ।

कोशः—'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । 'तुषारौ हिमसीकरौ' इति शाश्वतः । 'अनोकहः कुटः शालः' इत्यमरः । 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः । 'प्रकाशो द्योत आतपः' 'छत्रं त्वातपत्रम्' 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इत्यमरः ।

भावार्थः—निर्झरकणसम्पर्कात् शीतः पुष्पगन्धयुक्तत्वात् सुगन्धः ( आकम्पितत्वात्) मन्दश्च एवं शैत्यमान्द्यसौरभरूपगुणत्रययुक्तः वायुः सदाचारसम्पन्नं पवित्रं दिलीपं सेवितवान् । 'आचारः प्रथमो धर्मः' इत्युक्तत्वात् आचारसम्पन्नः सर्वेषां पूज्यो भवतीति भावः ।

हिन्दीश्लोकार्थः—पर्वत की झरनों के जलकणों से युक्त (शीतल) तथा वृक्षों के थोड़े से कम्पित फूलों के गन्ध से सम्पन्न (मन्द-सुगन्धि) वायु ने सदाचार से पवित्र राजा दिलीप की सेवा की ॥१३॥

शशाम वृष्ट्याऽपि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने ॥१४॥

सञ्जीविनी—शशामेति। गोप्तरि तस्मिन् वनं गाहमाने प्रविशति सति वृष्ट्या विनाऽपि दवाग्निर्वनाग्निः 'दवदावौ वनानले' इति हैमः। शशाम। फलानां पुष्पाणां च वृद्धिः। विशेष्यत इति विशेषा अतिशयिताऽऽसीत्। कर्मर्थि घञ्प्रत्ययः। सत्त्वेषु जन्तुषु मध्ये। 'यतश्च निर्धारणम्' इति सप्तमी। अधिकः प्रबलो व्याघ्रादिरूपो दुर्बलं हरिणादिकं न बबाधे।

अन्वयः - गोप्तरि तस्मिन् वनं गाहमाने 'सति' वृष्ट्या विनाऽपि दवाग्निः शशाम, विशेषा फलपुष्पवृद्धिः आसीत्, सत्त्वेषु अधिक ऊनम् न बबाधे।

वाच्य०—वृष्ट्या विनापि दवाग्निना शेमे। विशेषया फलपुष्पवृद्धया अभूयत। अधिकेन ऊनो न बबाधे। (अकर्मकत्वाद् द्वौ भावे प्रयोगौ, अन्तिमः सकर्मकत्वात् कर्मवाच्यः)।

चन्द्रिका—गोप्तरि त्रातरि, रक्षके इत्यर्थः, तस्मिन् राज्ञि दिलीपे, वनं विपिनं गाहमाने प्रविशति, सतीति शेषः। वृष्ट्या वर्षेण, विनापि अन्तरेणापि, स्वयमेवेत्यर्थः, दवाग्निः वनवह्निः, शशाम शान्तः। विशेषा अधिका, फलपुष्पाणां सस्यकुसुमानां, वृद्धिः समृद्धिः, आसीत् अभूत्। सत्त्वेषु प्राणिषु, मध्ये अधिकः प्रबलः, व्याघ्रादिरित्यर्थः, ऊनं दुर्बलम्, अजहरिणादिकमिति यावत्, न नैव, बबाधे पीडितवान्।

समासः—दवस्य अग्निः (ष० त०) दवाग्निः। फलानि च पुष्पाणि च (द्वन्द्व०) फलपुष्पाणि, फलपुष्पाणां वृद्धिः फलपुष्पवृद्धिः (ष० त०)। गोपायतीति गोप्ता, तस्मिन् गोप्तरि। गाहते इति गाहमानः, तस्मिन् गाहमाने।

कोशः—'वृष्टिर्वर्षम्' 'पृथग् विनान्तरेणर्ते हिरुङ् नाना च वर्जने'। 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' 'दवादावौ वनारण्यवह्नी' 'वृक्षादीनां फलं सस्यम्' 'हीनन्यूनावूनगर्ह्यौ' 'सत्त्वमस्त्री तु जन्तुषु' इति यथायथम् अमरः।

भावार्थः—धर्मात्मनो महाराजस्य दिलीपस्य तस्मिन् वने प्रवेशमात्रेण वृष्टिं विनैव दावाग्निः प्रशान्तः विशिष्टा फलपुष्पाणां समृद्धिः समभूत्। वन्यपशुषु परस्परं 'जीवो जीवस्य भोजनम्' इत्युक्तदिशा प्रबलः प्राणी बलहीनं न पीडयति स्म इति भावः।

हिन्दीश्लोकार्थः—पृथिवी के रक्षक उन राजा दिलीप के वन में प्रवेश करते ही वृष्टि के विना ही दावाग्नि प्रशान्त हुई, फलफूलों की समृद्धि अधिक हुई,

एवं जंगली जानवरों में प्रबल 'व्याघ्रादि' न्यूनबल 'हरिणादि' को नहीं सताता था ॥१४॥

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥१५॥

सञ्जीविनी—सञ्चारेति । पल्लवस्य रागो वर्णः पल्लवरागः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु ।' इति शाश्वतः । स इव ताम्रा पल्लवरागताम्रा । पतङ्गस्य सूर्यस्य प्रभा कान्तिः 'पतङ्गः पक्षिसूर्ययोः' इति शाश्वतः । मुनेर्धेनुश्च । दिगन्तराणि दिशामवकाशान् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । सञ्चारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयायास्तमयाय । धेनुपक्षे आलयाय च गन्तुं प्रचक्रमे ।

अन्वयः—पल्लवरागताम्रया पतङ्गस्य प्रभा मुनेः धेनुश्च दिगन्तराणि सञ्चारपूतानि कृत्वा दिनान्ते निलयाय गन्तुं प्रचक्रमे ।

वाच्य०—पल्लवरागताम्रया पतङ्गस्य प्रभया मुनेर्धेन्वा च ( दिगन्तराणि सञ्चारपूतानि कृत्वा दिनान्ते ) निलयाय गन्तुं प्रचक्रमे । ( भाव० )

चन्द्रिका—पल्लवस्य किसलयस्य, रागो वर्णः, तद्वत् ताम्रा रक्ता, पल्लवरागताम्रा, इदं पतङ्गप्रभायाः धेनोश्च विशेषणम् । पतङ्गस्य सूर्यस्य, प्रभा प्रकाशः मुनेः वसिष्ठस्य, धेनुश्च नन्दिनी च, दिशां हरिताम्, अन्तराणि अवकाशान्, मध्यभागान् इति यावत् । संचारेण भ्रमणन ( प्रभाधेनू उभे ) पूतानि पवित्राणि, कृत्वा विधाय, दिनान्ते सन्ध्याकाले, निलयाय तिरोभावाय—सूर्यप्रभापक्षे, नन्दिनीपक्षे च—आलयाय, वसिष्ठाश्रमायेति यावत् । गन्तुं यातुम्, प्रचक्रमे प्रवृत्ता । सायं समये सूर्यप्रभाधेनू स्वस्वनिलयाय गन्तु प्रवृत्ते इत्यर्थः ।—

समासः—पल्लवस्य रागः पल्लवरागः, पल्लवराग इव ताम्रा पल्लवरागताम्रा ( उपमानपूर्वपदकर्म० )। दिशाम् अन्तराणि दिगन्तराणि ( ष०त० ), तानि दिगन्तराणि । सञ्चारेण पूतानि सञ्चारपूतानि ( तृ०त० ), तानि सञ्चारपूतानि । दिनस्यान्तो दिनान्तः, तस्मिन् दिनान्ते ( ष०त० ) ।

कोशः—'पल्लवोऽस्त्री किसलयम्' इत्यमरः । 'निलयोऽस्तमये गृहे' इति हैमः । 'पतङ्गः पक्षिसूर्ययोः' 'स्युः प्रभा रुग्रुचिस्त्विड् भाभाश्छविद्युतिदीप्तयः' 'पूतं पवित्रं मेध्यञ्च' 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।' 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये', 'दिनान्ते तु सायं सन्ध्या पितृप्रसूः' इति चामराः ।

भावार्थः—सायंकाले आगते सूर्यप्रभा नन्दिनी च स्वस्वस्थानं गन्तुं प्रवृत्ते । उभे अपि सूर्यप्रभा-नन्दिन्यौ पल्लववत् ईषद्रक्तवर्णे, नन्दिन्या वर्णः स्वभावतः पाटलः (श्वेतरक्तः), सूर्यप्रभायाश्च सायंकाले पाटलवर्णः । उभे अपि निजसञ्चारेण दिगन्तरं पवित्रं चक्रतुः, इति भावः ।

हिन्दीश्लोकार्थः—पल्लव के वर्ण की भांति लाल-सफेद रंगवाली सूर्य की प्रभा तथा मुनि वसिष्ठ की गाय, ये दोनों दिशाओं के मध्यभाग को अपने संचार से पवित्र बनाकर सायंकाल अस्त होनेके लिए एवं अपने आश्रम जानेके लिए सन्नद्ध होने लगीं ॥ १५ ॥

तां देवतापित्रतिथिक्रियाऽर्थामन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥१६॥

सञ्जीविनी—तामिति । मध्यमलोकपालो भूपालः । देवतापित्रतिथीनां क्रियाः यागश्राद्धदानानि ता एवार्थः यस्यास्तां धेनुमन्वगनुपदं ययौ । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः । सतां मतेन सद्भिर्मान्येन । 'गतिबुद्धि-' इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । तेन राज्ञोपपन्ना युक्ता सा धेनुः सतां मतेन विधिनाऽनुष्ठानेनोपपन्ना युक्ता साक्षात्प्रत्यक्षा श्रद्धाऽऽस्तिक्यबुद्धिरिव बभौ च ।

अन्वयः—मध्यमलोकपालः देवतापित्रतिथिक्रियार्थाम् ताम् अन्वग् ययौ । सतां मतेन तेन उपपन्ना सा 'सतां मतेन' विधिना उपपन्ना साक्षात् श्रद्धेव बभौ च ।

वाच्य०—मध्यमलोकपालेन देवतापित्रतिथिक्रियार्था सा अन्वग् ययौ, सतां मतेन विधिनोपपन्नया तया साक्षात् श्रद्धया इव बभे च । ( भाव० )

चन्द्रिका—मध्यमलोकपालः मर्त्यलोकरक्षकः दिलीपः, देवताः अमराः, पितरः पितृदेवाः, अतिथयः आगन्तवः, एषां क्रियाः यागश्राद्धातिथ्यानि, ता एव अर्थः फलं प्रयोजनं वा, यस्याः ताम् । तां नन्दिनीम्, अन्वग् पृष्ठे, ययौ जगाम । सतां सज्जनानाम्, मतेन सम्मतेन, सन्तः दिलीपम् आदरबुद्ध्या पश्यन्तीति यावत्, तेन दिलीपेन उपपन्ना युक्ता, सा नन्दिनी सतां मतेन सज्जनाभीष्टेन, विधिना विधानेन, उपपन्ना युक्ता साक्षात् प्रत्यक्षा, देहधारिणीति यावत् । श्रद्धेव आस्तिक्यबुद्धिरिव, ( श्रद्धा 'इदं वेदोक्तं यज्ञादिकं स्वर्गादिफलं नैव व्यभिचरति'–इति दृढ प्रत्ययः ) बभौ बभासे । उपमालंकारः, राजविध्योः धेनुश्रद्धयोश्च उपमानोपमेयभावः ।

समासः—मध्ये भवो मध्यमः, मध्यमश्चासौ लोकश्च मध्यमलोकः ( कर्म० ) मध्यमलोकं पालयतीति मध्यमलोकपालः ( उपपदसमा० ) । देवताश्च पितरश्च अतिथयश्च ( द्वन्द्वस० ) देवतापित्रतिथयः, देवतापित्रतिथीनां क्रियाः एव अर्थः यस्याः सा ( बहु० ) देवतापित्रतिथिक्रियार्था, तां देवतापित्रतिथिक्रियार्थाम् ।

कोशः— 'लोकस्तु भुवने जने' 'वृन्दारका दैवतानि पुंसि वा, देवताः स्त्रियाम् ।' 'स्युरावेशिक आगन्तुरतिथिर्ना गृहागते' 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' 'विधिर्विधाने दैवेऽपि' 'साक्षात् प्रत्यक्षतुल्ययोः' इति यथायथममरः ।

भावार्थः—भूपतिः दिलीपः देवतापित्रतिथीनां पूजनसाधनभूतां तां धेनुम्

अनुससार । सज्जनाभिमतेन दिलीपेन युक्ता धेनुः शास्त्रोक्तविधानेन सहिता आस्तिक्यबुद्धिरिव शोभते स्म ।

हिन्दीश्लोकार्थः—भूलोक के स्वामी राजा दिलीप देवता, पितर और अतिथियों के सत्कार ( याग-श्राद्ध-भोजन ) के साधनभूत उस धेनु के पीछे चले। सज्जनों के सम्मत दिलीप से युक्त वह नन्दिनी भी सज्जनों से पूजित शास्त्रोक्त विधान से युक्त प्रत्यक्ष दिखाई देनेवाली श्रद्धा ( वेदोक्त स्वर्ग ईश्वरादिकों में विश्वास ) की भाँति सुशोभित होने लगी ॥ १६ ॥

स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥१७॥

सञ्जीविनी—स इति । स राजा । पल्वलेभ्योऽल्पजलाशयेभ्य उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि । बर्हाण्येषां सन्तीति बर्हिणा मयूराः । 'मयूरो बर्हिणो बर्ही' इत्यमरः । 'फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः' आवासवृक्षाणामुन्मुखा बर्हिणा येषु तानि श्यामायमानानि वराहबर्हिणादिनीलिनिम्ना, अश्यामानि श्यामानि भवन्तीति श्यामायमानानि । 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्प्रत्ययः । 'वा क्यषः' इत्यात्मनेपदे शानच् । मृगैरध्यासिता अधिष्ठिताः शाद्वला येषु तानि । शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः । 'शाद्वलः शादहरिते' इत्यमरः । 'शादः कर्दमशष्पयोः' इति विश्वः । 'नडशादाड्ड्वलच्' इति ड्वलच्प्रत्ययः । वनानि पश्यन् ययौ ।

अन्वयः—सः पल्वलोत्तीर्णवराहयूथानि आवासवृक्षोन्मुखबर्हिणानि मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ययौ ।

वाच्य०—तेन वनानि पश्यता सता यये । ( भाववा० )

चन्द्रिका—सः राजा दिलीपः, पल्वलेभ्यः अल्पसरोभ्यः, उत्तीर्णानि निर्गतानि, वराहयूथानि सूकरवृन्दानि, येषु तानि ( आवासवृक्षेषु ) आवासवृक्षाणाम् वासतरूणाम्, उन्मुखाः ऊर्ध्ववदनाः, उपरि मेघं पश्यन्त इति यावत् । बर्हिणाः मयूराः, येषु तानि । मृगैः कुरङ्गैः, अध्यासिताः अधिष्ठिताः, शाद्वलाः तृणवत्प्रदेशाः, येषु तानि । श्यामायमानानि असितवर्णपूर्णानि । वराह-बर्हिण-शाद्वलाश्च श्यामतावर्धकाः । वनानि अरण्यानि, पश्यन् विलोकयन्, ययौ जगाम । पादचारी राजा वनभूमेः प्राकृतिकसुषमां वीक्षमाणो यात्रामकरोदित्यर्थः ।

समासः—वराहाणां यूथानि वराहयूथानि ( ष०त० ), पल्वलेभ्यः उत्तीर्णानि वराहयूथानि येषु तानि ( बहु० ) पल्वलोत्तीर्णवराहयूथानि, तानि पल्वलोत्तीर्णवराहयूथानि । आवासस्य वृक्षाः आवासवृक्षाः (ष०त०), आवासवृक्षाणाम् उन्मुखाः बर्हिणाः, येषु तानि, (बहु०) आवासवृक्षोन्मुखबर्हिणानि, तानि आवासवृक्षोन्मुखबर्हिणानि, मृगैः अध्यासिताः शाद्वलाः येषु तानि (बहु०) मृगाध्यासितशाद्वलानि,

तानि मृगाध्यासितशाद्वलानि। अश्यामानि श्यामानि भवन्तीति श्यामायन्ते, श्यामायन्ते इति श्यामायमानानि, तानि श्यामायमानानि, (चत्वार्यपि वनविशेषणानीति द्वितीयान्तानि)। पश्यन्तीति पश्यन्।

कोशः—'वेशन्तः पल्वलं चाल्पसरः' 'वराहः सूकरो वृष्टिः कोलः पोत्री किरिः किटिः'। 'मयूरो बर्हिणो बर्हो नीलकण्ठो भुजङ्गभुक्' 'शाद्वलः शादहरिते' इत्यमरः। 'शादः कर्दमशष्पयोः' इति विश्वः। 'शष्पं बालतृणं घासः' इत्यमरः।

भावार्थः—राजा दिलीपः परावर्तनसमये वनप्रदेशान् पश्यति। क्वचित् स्वल्पजलाशयेभ्यः वराहाः निर्यान्ति, कुत्रचित् मयूराः निवासवृक्षेषु ऊर्ध्वं वनं सोल्लासं पश्यन्ति, कर्हिचित् हरिणाः बालतृणवत्सु भागेषु उपविष्टाः सन्ति। एवं सर्वत्र वनेषु श्याममयता दृश्यते—इति भावः।

हिन्दीश्लोकार्थः—राजा दिलीप 'सर्वत्र एकदम' श्यामस्य वनों को देखते हुए गये। कहीं छोटे-छोटे तालावों से सूअरों के झुण्ड के झुण्ड निकल रहे थे, कहीं तो आवासवृक्षों में ऊपर (बादल की ओर) देखने वाले मोर थे, और कहीं तो हरिण हरे घास वाले भूभागों में बैठे थे। इस प्रकार चारों ओर श्यामता फैली थी॥१७॥

आपीनभारोद्वहनप्रयत्नाद् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम्॥१८॥

सञ्जीविनी—आपीनेति। 'गृष्टिः सकृत्प्रसूता गौः'। इति हलायुधः। नरेन्द्रश्च। उभौ यथाक्रमम्। आपीनमूधः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। आपीनस्य भारोद्वहने प्रयत्नात्प्रयासाद् वपुषो गुरुत्वादाधिक्याच्च। अञ्चिताभ्यां चारुभ्यां गताभ्यां गमनाभ्यां तपोवनादावृत्तेः पन्थास्तं तपोवनावृत्तिपथम् 'ऋक्पूरब्धूःपथामानक्षे' इत्यनेन सामासान्तोऽप्रत्ययः। अलञ्चक्रतुर्भूषितवन्तौ।

अन्वयः—गृष्टिः नरेन्द्रः 'च' उभौ 'यथासंख्यम्' आपीनभारोद्वहनप्रयत्नाद् वपुषो गुरुत्वात् अञ्चिताभ्यां गताभ्यां तपोवनावृत्तिपथः अलञ्चक्रतुः।

वाच्य०—गृष्ट्या नरेन्द्रेण च उभाभ्यां तपोवनावृत्तिपथम् अलञ्चक्रे। (कर्म०)

चन्द्रिका—गृष्टिः एकवारं प्रसूता गौः, प्रकृते नन्दिनी, नरेन्द्रः राजा दिलीप इति उभौ, यथासंख्यं प्रथमविशेषणं प्रथमोक्तार्याः गौः, द्वितीयं नरेन्द्रस्य, आपीनस्य ऊधसः, स्तनस्येति यावत्, भारोद्वहने गुरुत्वधारणे, प्रयत्नाद् प्रयासात्, परिश्रमाद्। वपुषः देहस्य, गुरुत्वाद् भारात् च, हेतोः, अञ्चिताभ्यां चित्तहारिभ्यां, गताभ्यां गमनाभ्याम्, तपोवनात् आश्रमपर्यन्तम् आवृत्तेः परावर्तनस्य, पन्थाः मार्गः, तपोवनावृत्तिपथः, तं आश्रमपरावर्तनमार्गम्, अलञ्चक्रतुः भूषयामासतुः। उभावपि निजमन्दगमनाभ्यां मार्गसौन्दर्यं वर्धयामासतुरित्यर्थः।

समासः—आपीनस्य भारः आपीनभारः (ष०त०), आपीनभारस्य उद्वहनम्

आपीनभारोद्वहनम्, आपीनभारोद्वहने प्रयत्नः (स०त०) आपीनभारोद्वहनप्रयत्नः, तस्मात् आपीनभारोद्वहनप्रयत्नात्। गुरुणो भावः गुरुत्वं, तस्मात् गुरुत्वात्। नरेषु नराणां वा इन्द्रः नरेन्द्रः। तपसः वनं तपोवनम्, तपोवनाद् आवृत्तिः तपोवनावृत्तिः (पं० त०) तपोवनावृत्तेः पन्थाः तपोवनावृत्तिपथः (ष०त०) तं तपोवनावृत्तिपथम्।

कोश —'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति विश्वः। 'ऊधस्तु क्लीबमापीनम्' 'गृष्टिः सकृत्प्रसूता गौः' 'पूजितेऽञ्चितः' 'गात्रं वपुः संहननम्' इति चामराः।

भावार्थः—नन्दिनी स्तनभारात् दिलीपश्च देहगरिम्णा चेत्युभौ आकर्षक-मन्थरगमनाभ्यां वसिष्ठाश्रमस्य परावर्तनमार्गं शोभयामासतु—इति भावः।

हिन्दीश्लोकार्थः—एक बार ब्याई हुई नन्दिनी अपने स्तनभार से, राजा दिलीप अपने देहकी गुरुता (वजन) से, इस प्रकार दोनोंने अपने धीरे-धीरे चलने से तपोवन लौटने के मार्ग को अलंकृत कर दिया॥ १८॥

वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात्।
पपौ निमेषालसपक्ष्मपंक्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥१९॥

सञ्जीविनी—वसिष्ठेति। वसिष्ठधेनोरनुयायिनमनुचरं वनान्तादावर्तमानं प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमेषेष्वलसा मन्दा पक्ष्मणां पंक्तिर्यस्याः सा निर्निमेषा सतीत्यर्थः। लोचनाभ्यां करणाभ्याम्, उपोषिताभ्यामिव। उपवासो भोजननिवृत्तिस्तद्वद्भ्यामिव। वसतेः कर्तरि क्तः। 'पपौ'। यथोपोषितोऽतितृष्णया जलमधिकं पिबति तद्वदतितृष्णयाऽधिकं व्यलोकयदित्यर्थः।

अन्वयः—वसिष्ठधेनोः अनुयायिनं वनान्ताद् आवर्तमानं तं वनिता निमेषालस-पक्ष्मपंक्तिः 'सती' उपोषिताभ्याम् इव लोचनाभ्यां पपौ।

वाच्य०—वसिष्ठधेनोः अनुयायी वनान्ताद् आवर्तमानः सः निमेषालसपक्ष्म-पंक्त्या वनितया लोचनाभ्यां पपे। (कर्म०)

चन्द्रिका—वसिष्ठधेनोः नन्दिन्याः अनुयायिनं अनुसरन्तम्, वनान्ताद् अरण्या-ञ्चलाद्, आवर्तमानं परावर्तमानम्, आश्रमं प्रत्यागच्छन्तमित्यर्थः, तं दिलीपम्, वनिता जाया सुदक्षिणेति भावः, निमेषेषु निमीलनेषु, मनुष्यसहजेषु निमेषपातेष्वि-त्यर्थः, अलसा मन्थरा, पक्ष्मणां नेत्रलोम्नां, पंक्तिः राजिः, यस्याः सा एवभूता सती उपोषिताभ्यामिव कृतोपवासाभ्यां यथा, लोचनाभ्यां नयनाभ्याम्, पपौ आचामत्, सतृष्णं निर्निमेषपाताभ्यां नेत्राभ्यां चिरम् अपश्यदित्यर्थः। उपोषिताभ्यामिवेत्यत्र हेतूत्प्रेक्षा।

समासः—वसिष्ठस्य धेनुः वसिष्ठधेनुः (ष० त०), तस्याः वसिष्ठधेनोः। अनु (पश्चात्) यातीति अनुयायी, तम् अनुयायिनम्। वनस्य अन्तः (ष०त०) वनान्तः,

तस्मात् वनान्तात्। पक्ष्मणां पंक्तिः पक्ष्मपंक्तिः (ष०त०), निमेषेषु अलसा पक्ष्मपंक्तिः यस्याः सा निमेषालसपक्ष्मपंक्तिः ( बहु० )।

कोशः—'धेनुः स्यान्नवसूतिका' 'वनिता महिला तथा' 'पक्ष्माक्षिलोम्नि किञ्जल्के' 'वीथ्यालिराञ्जलिः पंक्तिः' 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः।

भावार्थः—नन्दिनीमनुसरन् वनात् आयान्तं दिलीपं सुदक्षिणा निमेषपातरहिताभ्यां नयनाभ्यां चिरमपश्यदिति भावः। यथा कृतोपवासोऽतितृषितो भवति तथा नयने चिरमपश्यतामिति भावः।

हिन्दीश्लोकार्थः—वसिष्ठजी की गाय नन्दिनी के पीछे-पीछे चलने वाले तथा वनाञ्चल से लौटने वाले राजा दिलीप को धर्मपत्नी सुदक्षिणा ने आँखें फाड़ कर एकटक से मानों प्यासी आँखों से पिया अर्थात् सस्नेह देखा ॥ १९ ॥

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥२०॥

सञ्जीविनी—पुरस्कृतेति। वर्त्मनि पार्थिवेन पृथिव्या ईश्वरेण। 'तस्येश्वरः' इत्यञ्प्रत्ययः। पुरस्कृताऽग्रतः कृता० धर्मस्य पत्नी धर्मपत्नी धर्मार्थपत्नीत्यर्थः। अश्वघासादिवत्तादर्थ्ये षष्ठीसमासः। पार्थिवस्य धर्मपत्न्या प्रत्युद्गता सा धेनुस्तदन्तरे तयोर्दम्पत्योर्मध्ये। दिनक्षपयोर्दिनरात्र्योर्मध्यगता सन्ध्येव विरराज।

अन्वयः—वर्त्मनि पार्थिवेन पुरस्कृता पार्थिवधर्मपत्न्या प्रत्युद्गता सा धेनुः तदन्तरे दिनक्षपामध्यगता सन्ध्या इव रराज।

वाच्य०—पार्थिवेन पुरस्कृतया पार्थिवधर्मपत्न्या प्रत्युद्गतया तया धेन्वा दिनक्षपामध्यगतया सन्ध्यया इव रेजे। ( भाव० )

चन्द्रिका—वर्त्मनि मार्गे, पार्थिवेन दिलीपेन, पुरस्कृता, अग्रे कृता, पार्थिवस्य दिलीपस्य, धर्मपत्न्या सुदक्षिणया। 'धर्मे कामे च नातिचरामि' इति विवाहे प्रतिज्ञाकरणात् पतिः धर्मं तयैव सहानुतिष्ठति-इति धर्मार्थपत्नीत्यर्थः। प्रत्युद्गता आदरार्थं प्रत्युच्चलिता, आगच्छन्तौ धेनुदिलीपौ दूराद् विलोक्य सुदक्षिणया अभिमुखम् आगतमित्यर्थः। सा धेनुः नन्दिनी, तदन्तरे तयोर्मध्ये, सुदक्षिणादिलीपयोः अन्तरे, दिनक्षपयोः दिवसरात्र्योः, मध्यगता अन्तरस्थिता, सन्ध्या सायं समयः, इव यथा, विरराज शुशुभे।

समासः—पृथिव्या ईश्वरः पार्थिवः, तेन पार्थिवेन। धर्मस्य पत्नी (ष० त०) धर्मपत्नी, पार्थिवस्य धर्मपत्नी पार्थिवधर्मपत्नी (ष० त०), तया पार्थिवधर्मपत्न्या। दिनञ्च क्षपा च दिनक्षपे (द्वन्द्वस०), दिनक्षपयोः मध्यं दिनक्षपामध्यम् (ष० त०), दिनक्षपामध्ये गता (सप्त० त०) दिनक्षपामध्यगता।

कोशः—'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ'। 'अयनं वर्त्ममार्गाध्व-

पन्थान:पदवी सृतिः' 'राजा राट् पार्थिवः क्ष्माभृत्' 'अन्तरम् ··अवसरमध्येऽन्तरात्मनि च ।' 'सायं सन्ध्या पितृप्रसूः' इति यथायथममरः ।

भावार्थः—पृष्ठे राजा मध्ये नन्दिनी अग्रे पुनः सुदक्षिणा इति क्रम आश्रमनिकटे आसीत् । इदानीं दम्पत्योः मध्ये स्थिता नन्दिनी दिनरात्र्योः मध्यस्थिता सन्ध्यावत् भासते स्मेति भावः । उपमालङ्कारः । (सन्ध्यानन्दिन्योः उपमानोपमेयभूतयोः साधर्म्यं पाटलवर्णता स्त्रीलिङ्गञ्च । एवमेव दिनक्षपयोः उपमानभूतयोः दिलीपसुदक्षिणयोः उपमेयभूतयोः पुंस्त्रीलिङ्गमेव सादृश्यम् । )

हिन्दीश्लोकार्थः—आश्रम निकट के मार्ग में पीछे राजा मध्य में नन्दिनी, आगे अगवानी करने आई हुई सुदक्षिणा, इस प्रकार दिलीप और सुदक्षिणा के मध्य में रहने वाली नन्दिनी दिन और रात के बीच में रहने वाली सन्ध्या की तरह शोभा देने लगी ॥२०॥

प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।
प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥२१॥

सञ्जीविनी—प्रदक्षिणीकृत्येति । अक्षतानां पात्रेण सह वर्त्तेते इति साक्षतपात्रौ हस्तौ यस्याः सा सुदक्षिणा पयस्विनीं प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य प्रणम्य च । अस्या धेन्वा विशालं शृङ्गमध्यम् । अर्थसिद्धेः कार्यसिद्धेर्द्वारं प्रवेशमार्गमिव, आनर्चार्चयामास । अर्चतेर्भौवादिकाल्लिट् ।

अन्वयः—साक्षतपात्रहस्ता सुदक्षिणा पयस्विनीं तां प्रदक्षिणीकृत्य प्रणम्य च अस्याः विशालं शृङ्गान्तरम् अर्थसिद्धेः द्वारम् इव आनर्च ।

वाच्य०—साक्षतपात्रहस्तया सुदक्षिणया अस्याः शृङ्गान्तरम् अर्थसिद्धेः द्वारमिव आनर्चे ( कर्म० ) ।

चन्द्रिका—अक्षतानां तण्डुलानां, पात्रं भाजनं, अक्षतपात्रेण सह वर्तेते इति साक्षतपात्रे ईदृशौ हस्तौ करौ, यस्याः सा साक्षतपात्रहस्ता, अक्षतभाण्डं करयोरादधाना इत्यर्थः, सुदक्षिणा राज्ञी, पयस्विनीं प्रशस्तक्षीरसम्पन्नां, ता पूर्वोक्तां नन्दिनीम्, प्रदक्षिणीकृत्य परिक्रम्य, नन्दिन्याः परिक्रमं कृत्वेति यावत्, प्रणम्य अभिवाद्य, चः समुच्चये । अस्याः नन्दिन्याः, विशालं विपुलं, शृङ्गयोः विषाणयोः, अन्तरं मध्यम्, अर्थसिद्धेः कार्यलाभस्य, द्वारम् इव प्रतीहारं यथा, आनर्च पूजयामास ।

समासः—अप्रदक्षिणां प्रदक्षिणां कृत्वा प्रदक्षिणीकृत्य । प्रशस्तं पयोऽस्ति अस्या इति पयस्विनी, ताम् पयस्विनीम् । अक्षतानां पात्रम् अक्षतपात्रम्, अक्षतपात्रेण सह वर्तेते इति साक्षतपात्रौ, साक्षतपात्रौ हस्तौ यस्याः सा साक्षतपात्रहस्ता (बहुव्रीहिगर्भो बहुव्रीहिः , शृङ्गयोः अन्तरम् शृङ्गान्तरम् (ष० त०) तत् शृङ्गान्तरम् । अर्थस्य सिद्धिः अर्थसिद्धिः, तस्याः अर्थसिद्धेः ( ष० त० ) ।

कोशः—'योग्यभाजनयोः पात्रम्' 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्'

'अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः' 'स्त्री द्वार्द्वारं प्रतीहारः' इति चामरः ।

भावार्थः—सुदक्षिणा हस्तयोः अक्षतपात्रम् आदाय नन्दिन्याः परिक्रमं प्रणामं च कृत्वा तस्या विशालं शृङ्गयोर्मध्यं कार्यलाभस्य द्वारमिव स्थितं पूजितवती ।

हिन्दीश्लोकार्थः—अक्षतों से युक्त पात्र को हाथों में लिये सुदक्षिणा ने प्रशस्त दुग्धसम्पन्ना उस नन्दिनी की परिक्रमा और प्रणाम कर, उसके विशाल सींगों के मध्य भाग की पूजा की जो कि प्रयोजन की सिद्धि के लिए दरवाजे सा था ॥२१॥

वत्सोत्सुकाऽपि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥२२॥

सञ्जीविनी—वत्सोत्सुकाऽपीति । सा धेनुर्वत्सोत्सुकाऽपि वत्सोत्कण्ठितापि स्तिमिता निश्चला सती सपर्यां पूजां प्रत्यग्रहीदिति हेतोस्तौ दम्पती ननन्दतुः । पूजास्वीकारस्यानन्दहेतुमाह—भक्त्येति । पूज्यष्वनुरागो भक्तिस्तयोपपन्नेषु युक्तेषु विषये तद्विधानां तस्या धेन्वा विधेव विधा प्रकारो येषां तेषाम् महतामित्यर्थः । प्रसादस्य चिह्नानि लिङ्गानि पूजास्वीकारादीनि पुरःफलानि पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि । अविलम्बितफलसूचकलिङ्गदर्शनादानन्दो युज्यत इत्यर्थः ।

अन्वयः—सा वत्सोत्सुकाऽपि स्तिमिता 'सती' सपर्यां प्रत्यग्रहीत् इति तौ ननन्दतुः । भक्त्या उपपन्नेषु तद्विधानां प्रसादचिह्नानि पुरःफलानि हि ।

वाच्य०—तया वत्सोत्सुकयाऽपि स्तिमितया सपर्या प्रत्यग्राहि—इति ताभ्यां ननन्दे । प्रसादचिह्नैः पुरःफलैर्हि भूयते । ( भाव० ) •

चन्द्रिका—सा धेनुः, वत्से शकृत्करौ, 'शकृत्करिस्तु वत्सः स्याद्' इत्यमरः । उत्सुकाऽपि कुतूहलयुक्ताऽपि, स्तिमिता निस्तब्धा, चाञ्चल्यरहितेति यावत् । 'सती भवन्ती' सपर्यां निजपूजाम्, प्रत्यग्रहीत् स्वीचकार, इति कारणात्, तौ सुदक्षिणा-दिलीपौ, ननन्दतुः मुमुदतुः, हर्षमनुभूतवन्तौ इत्यर्थः । भक्त्या स्नेहविशेषेण, 'पूज्येष्वनुरागो भक्तिः' उपपन्नेषु युक्तेषु तद्विधानां नन्दिनीसदृशानाम् । प्रसादस्य अनुग्रहस्य, प्रसन्नताया इति यावत्, चिह्नानि लक्षणानि, पुरःफलानि अग्रेफल-युक्तानि, हि एव । यदि नन्दिनीसदृशाः महानुभावाः प्रसन्नाः तदा नूनं निकट एव मनोरथसिद्धिर्भविष्यति इत्यर्थः ।

समासः—वत्से उत्सुका वत्सोत्सुका (स० त०) । सा च स च तौ (एकशेषः, 'पुमान् स्त्रिया' इति पुंशेषः) । तस्याः विधा इव विधा येषां ते (बहु०) तद्विधाः, तेषाम् । प्रसादस्य चिह्नानि प्रसादचिह्नानि ( ष० त० ) । पुरः फलं येषां तानि ( बहु० ) पुरःफलानि ।

कोशः—'शकृत्करिस्तु वत्सः स्यात्' 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः

सभा:' । 'विधा विधौ प्रकारे च' 'प्रसादस्तु प्रसन्नता' 'चिह्नं लक्ष्म च लक्षणम्' 'सस्ये हेतुकृते फलम् ।' 'स्तिमितौ विलन्नानिश्चलौ ।' इत्यनेकार्थ० । 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः ।

भावार्थः—नन्दिनी यावद्दिनं विरहात् वत्से उत्कण्ठायुक्ताऽपि निश्चलतया निजकृतां गन्धमाल्याद्यर्चनां स्वीकृतवती इति सुदक्षिणादिलीपयोः हर्षः समभूत् । अतः तादृशमहानुभावानां भक्तोपरि प्रसन्नता अग्रे फलं जनयत्येव, वृथा न भवतीति भावः ।

हिन्दीश्लोकार्थः—नन्दिनी ने, अपने बछड़े पर उत्सुकता रखने पर भी चञ्चलता त्याग कर निश्चलता से पूजा को स्वीकृत की—इसलिए सुदक्षिणा और दिलीप को आनन्द हुआ । क्योंकि भक्तों पर नन्दिनी के सदृश महानुभावों की प्रसन्नता का लक्षण निश्चय ही अभीष्ट देने वाला होता है ॥ २२ ॥

गुरोः सदारस्य निपीड्य पादौ समाप्य सान्ध्यञ्च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥२३॥

सञ्जीविनी—गुरोरिति । भुजोच्छिन्नरिपुर्दिलीपः सदारस्य दारैररुन्धत्या सह वर्त्तमानस्य गुरोः । उभयोरपीत्यर्थः । 'भार्या जायाऽथ पुम्भूम्नि दाराः' इत्यमरः । पादौ निपीड्याभिवन्द्य । सान्ध्यं सन्ध्यायां विहितं विधिमनुष्ठानं च समाप्य । दोहावसाने निषण्णामासीनां दोग्ध्रीं दोहनशीलाम् । तृन्' इति तृन्प्रत्ययः । धेनुमेव पुनर्भेजे सेवितवान् । दोग्ध्रीमिति निरुपपदप्रयोगात्कामधेनुत्वं गम्यते ।

अन्वयः—भुजोच्छिन्नरिपुः दिलीपः सदारस्य गुरोः पादौ निपीड्य सान्ध्यं विधिञ्च समाप्य दोहावसाने निषण्णां दोग्ध्रीम् पुनरेव भेजे ।

वाच्य०—भुजोच्छिन्नरिपुणा दिलीपेन निषण्णा दोग्ध्री पुनरेव भेजे । (कर्म०)

चन्द्रिका—भुजेन बाहुना, उच्छिन्नाः नाशिताः, रिपवः शत्रवः, येन तथोक्तः । दिलीपः राजा, सदारस्य सभार्यस्य, गुरोः वसिष्ठस्य, गृणाति उपदिशति तत्त्वम् इति गुरुः । निर्वचनं गुरुशब्दस्य–'गुरुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः ।' शिष्याज्ञानस्य निरोधक इत्यर्थः । अरुन्धत्याः वसिष्ठस्य चेत्यर्थः । पादौ चरणौ, निपीड्य प्रणम्य, संवाह्य वा ( पैर दाबकर ), सान्ध्यं सायङ्काले विहितम्, विधिं कृत्यम्, सन्ध्यावन्दनादिकर्मिति यावत्, चः समुच्चये, समाप्य निर्वर्त्य, अनुष्ठायेति भावः । दोहस्य दुग्धग्रहणस्य, अवसाने समाप्तौ, निषण्णां चतुरोऽपि पादान् आकुञ्च्य समुपविष्टाम्, सर्वां शयनमुद्रेयम् । दोग्ध्रीं दोहनशीलाम्, इदमेव विशेष्यम् धेनुं नन्दिनीमित्यर्थः । 'दुग्धदोग्ध्रीम्' इति अकथयित्वा केवलदोग्ध्री–पदप्रयोगात् अभीष्टान् सर्वान् पदार्थान् ददातीति कामधेनुत्वं द्योतितम् । पुनरेव भूय एव, गतदिनवत् स्थितः स्थितामि'त्यादिना वर्णितरीत्या आश्रमेऽपि रात्रावपि गोसेवायामेव तत्पर आसीदिति द्योत्यते । भेजे सेवितवान् ।

समासः—दारैः सहितः सदारः (सहपूर्वपदबहु०) तस्य सदारस्य । सन्ध्यायां भवः सान्ध्यः, तं सान्ध्यम् । दोहस्य अवसानं दोहावसानम् (प० त०), तस्मिन् दोहावसाने । दोग्धि इति दोग्ध्री, तां दोग्ध्रीम् । भुजेन ( एकबाहुनैव शत्रुजयः पराक्रमातिशयं द्योतयेत्, प्राधान्यमेकस्येत्यर्थः ) उच्छिन्नाः रिपवः येन सः भुजोच्छिन्नरिपुः ।

कोशः—'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'भुजबाहू प्रवेष्टो दोः' 'रिपौ वैरि-सपत्नारिद्विषद्द्वेषणदुर्हृदः ।' 'पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।' 'विधिर्विधाने दैवेऽपि' 'मुहुः पुनः पुनः शश्वत्' इत्यमराः ।

भावार्थः—नाशितशत्रुः राजा धेन्वा सह आश्रमं परावर्त्य गुरोः गुरुपत्न्याश्च पादयोः प्रणिपत्य सायं सन्ध्यावन्दनादिकं विधाय शयनार्थम् आसीनां नन्दिनीं पुनः सेवितवान् । रात्रौ तदन्तिके एव स्वयमपि स्थितवान् इति भावः ।

हिन्दीश्लोकार्थः—बाहुबल से शत्रु नाश किये हुए राजा दिलीप अरुन्धती सहित गुरुवसिष्ठजी के चरणों की वन्दना कर, सायं सन्ध्यादि से निवृत्त होने के बाद, दूध दुहने के पश्चात् बैठी हुई नन्दिनी को पुनः सेवा में लग गये । रात में आश्रम पर भी गोसेवातत्पर थे ॥ २३ ॥

तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।
क्रमेण सुप्तामनुसंविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥२४॥

सञ्जीविनी—तामिति । गोप्ता रक्षको गृहिणीसहायः पत्नीद्वितीयः सन् । उभावपीत्यर्थः । अन्तिके न्यस्ता बलयः प्रदीपाश्च यस्यास्तां तथोक्तां पूर्वोक्तां निषण्णां धेनुमन्वास्यानूपविश्य क्रमेण सुप्तामन्वन्तरं संविवेश सुष्वाप । प्रातः सुप्तोत्थितामनूदतिष्ठदुत्थितवान् । अत्रानुशब्देन धेनुराजव्यापारयोः पौर्वापर्यमुच्यते, क्रमशब्देन धेनुव्यापाराणामेवेत्यपौनरुक्त्यम् । 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया ।

अन्वयः—गोप्ता गृहिणीसहायः 'सन्' अन्तिकन्यस्तबलिप्रदीपां ताम् अन्वास्य क्रमेण सुप्ताम् अनुसंविवेश । प्रातः सुप्तोत्थिताम् अनूदतिष्ठत् ।

वाच्य०—गोप्त्रा गृहिणीसहायेन सुप्ता अनुसंविविशे, प्रातः सुप्तोत्थिता अनूदस्थीयत । ( भाव० )

चन्द्रिका—गोप्ता परित्राता दिलीपः, गृहिणी पत्नी, सहाया सहगामिनी यस्यैवंभूतः 'सन् भवन्', अन्तिके समीपे, न्यस्ता. निहिताः, बलयः उपहाराः, प्रदीपाः दीपाः, यस्यास्ताम् अन्तिकन्यस्तबलिप्रदीपाम् । तां निषण्णां नन्दिनीम्, अन्वास्य अनूपविश्य, क्रमेण यथाक्रमम्, सुप्तां निद्राणाम्, अनुसंविवेश पश्चात् सुष्वाप. प्रात प्रभाते, सुप्तोत्थितां शयनानन्तरं प्रबुद्धाम् । अनूदतिष्ठत् पश्चादुत्तस्थौ, प्रबुद्ध इत्यर्थः । अन्वास्य अनुसंविवेश, अनूदतिष्ठत् इति आसन-संवेशन-उत्थान-क्रियासु प्रथम धेनाः पश्चाच्च राज्ञः इति द्योतनाय स्थलत्रयेऽपि 'अनु' शब्दः ।

'क्रमेण' इति पदेन तु नन्दिनीव्यापाराणामेव आसनोपवेशनोत्थानानां क्रमभावित्वमुच्यते ।

समासः—गृहिणी सहाया यस्य सः ( बहु० ) गृहिणीसहायः । बलयश्च प्रदीपाश्च बलिप्रदीपाः (द्वन्द्व० , अन्तिके न्यस्ताः बलिप्रदीपाः यस्याः सा (बहु०) अन्तिकन्यस्तप्रदीपा, ताम् अन्तिकन्यस्तबलिप्रदीपाम् । सुप्ता ( प्रथमं ) चासौ उत्थिता (पश्चात्) च सुप्तोत्थिता (विशेषणोभयपदकर्म०) तां सुप्तोत्थिताम् ।

कोश:—'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' 'दीपः प्रदीपः' 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' 'अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ।' 'स्यान्निद्राशयनं स्वापः स्वप्नः संवेश इत्यपि' इति चामराः ।

भावार्थः—सुदक्षिणासहितो राजा निकटनिहितदीपोपहारायाः उपविष्टायाः नन्दिन्याः पृष्ठभागे उपविश्य, ततः नन्दिन्यां सुप्तायां सपत्नीकः स्वयं सुप्तः प्रात.काले पुनः यदा नन्दिनी उत्थिता तदा स्वयमपि समुत्थितः अभूत् । 'स्थितः स्थितां' इत्युक्तपद्धत्या तत्सेवा आश्रमेऽपि चलति स्मेति भाव. ।

हिन्दीश्लोकार्थ:—रक्षा करने वाले राजा पत्नी के साथ, दीप उपहार आदि जिसके पास रखे गये हैं, ऐसी बैठी हुई नन्दिनी के पीछे बैठकर क्रम से नन्दिनी के सोने के बाद स्वयं भी सोकर पश्चात् नन्दिनी के उठने ( जगने ) के अनन्तर आप भी उठे ॥ २४ ॥

इत्थं व्रतं धारयतः प्रजाऽर्थं समं महिष्या महनीयकीर्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥२५॥

सञ्जीविनी—इत्थमिति । इत्थमनेन प्रकारेण प्रजाऽर्थं सन्तानाय महिष्या सममभिषिक्तपत्न्या सह । 'कृताभिषेका महिषी' इत्यमरः । व्रतं धारयतः, महनीया पूज्या कीर्तिर्यस्य तस्य दीनानामुद्धरणं दैन्यविमोचनं तत्रोचितस्य परिचितस्य तस्य नृपस्य, त्रयो गुणा आवृत्तयो येषां तानि त्रिगुणानि त्रिरावृत्तानि सप्त दिनान्येकविंशतिदिनानि व्यतीयुः ।

अन्वयः—इत्थं प्रजार्थं महिष्या समं व्रतं धारयतः महनीयकीर्तेः दीनोद्धरणोचितस्य तस्य त्रिगुणानि सप्त दिनानि व्यतीयुः ।

वाच्य०—इत्थं तस्य सप्तभि. त्रिगुणैः दिनैः व्यतीये । (भाव०)

चन्द्रिका—इत्थम् अनेन प्रकारेण, प्रजार्थं सन्तानप्राप्तये, महिष्या राज्ञ्या, सुदक्षिणया, समं सह, व्रतं नियमम्, ब्रह्मचर्याध शय्यादिकं दीक्षाविशेषमिति यावत्, धारयतः वहतः, महनीया सम्भावनीया, कीर्तिः यशः यस्य तस्य महनीयकीर्तेः पूजनीययशसः, दीनानां निर्धनानाम्, निराश्रयाणां निर्बलानां वा, उद्धरणे समुन्नयने, उचितस्य योग्यस्य, अर्थाश्रयादिहीनानाम् अर्थाश्रयादिदानेन तेषां दैन्यमोचनतत्परस्येति भाव. । तस्य दिलीपस्य, त्रिगुणानि—त्रिभिः आवर्तितानि गुणितानि, सप्त

सप्तसंख्याकानि, दिनानि अहानि, अर्थात् एकविंशतिदिनानि, व्यतीयुः व्यतीतानि। (वि-अतिपूर्वक 'इण् गतौ' लिटि प्रथमपुरुषब०, व्यतीयाय व्यतीयतुः व्यतीयुः।)

समासः—प्रजायै प्रजार्थम् (अस्वपदविग्रहः)। महनीया कीर्तिः यस्य सः महनीयकीर्तिः (बहु०), तस्य महनीयकीर्तेः। दीनानाम् उद्धरणं, दीनोद्धरणम्, (ष० त०), दीनोद्धरणे उचितः दीनोद्धरणोचितः (स० त०)। त्रिभिः गुणः त्रयो गुणा वा येषां तानि त्रिगुणानि।

कोशः—'नियमो व्रतमस्त्री तत्' 'कृताभिषेका महिषी' 'सार्धं साकं सत्रा समं सह' 'निःस्वस्तु कृपणो दीनः' 'यशः कीर्तिः समज्ञा च' 'घस्रो दिनाहनी वा तु' इति चामराः।

भावार्थः—अनेन क्रमेण गोसेवा-नियमं जायया सह समाचरतो दिलीपस्य एकविंशतिः दिनानि निर्गतानि।

हिन्दीश्लोकार्थः—इस प्रकार सन्तान के लिए पट्टरानी सुदक्षिणा के साथ नियम को धारण करते हुए उत्कृष्ट कीर्ति से युक्त दीनों के उद्धार में लगे हुए महाराज दिलीप को तीन से गुने गये सात (इक्कीस) दिन बीत गये ॥२५॥

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः।
गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥२६॥

सञ्जीविनी—अन्येद्युरिति। अन्येद्युरन्यस्मिन्दिने द्वाविंशे दिने। 'सद्यःपरुत्परा०' इत्यादिना निपातनादव्ययत्वम्। 'अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात्। तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः' इत्यमरः। मुनिहोमधेनुः। आत्मानुचरस्य भावमभिप्रायं दृढभक्तित्वम्। 'भावोऽभिप्राय आशयः' इति यादवः। जिज्ञासमाना ज्ञातुमिच्छन्ती। 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदे शानच्। प्रपतन्त्यस्मिन्निति प्रपातः पतनप्रदेशः गङ्गायाः प्रपातस्तस्यान्ते समीपे विरूढानि जातानि शष्पाणि बालतृणानि यस्मिंस्तत्। 'शष्पं बालतृणं घासः' इत्यमरः। गौरीगुरोः पार्वतीपितुर्गह्वरं गुहामाविवेश।

अन्वयः—अन्येद्युः मुनिहोमधेनुः आत्मानुचरस्य भावं जिज्ञासमाना गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोः गह्वरम् आविवेश।

वाच्य०—आत्मानुचरस्य भावं जिज्ञासमानया मुनिहोमधेन्वा गौरीगुरोः गह्वरम् आविविशे। (कर्म०)

चन्द्रिका—अन्येद्युः द्वाविंशे दिवसे, मुनिहोमधेनुः वसिष्ठयागसाधनभूता नन्दिनी, आत्मानुचरस्य स्वानुयायिनः, दिलीपस्येति यावत्। भावम् अभिप्रायम्, अनुरागदृढतामिति यावत्, जिज्ञासमाना ज्ञातुम् अभिलषन्ती, गङ्गायाः भागीरथ्याः, प्रपातस्य भृगुप्रदेशस्य, अन्ते निकटे, विरूढानि अङ्कुरितानि, उत्पन्नानीति यावत्,

शष्पाणि बालतृणानि यस्मिन् तत् गङ्गाप्रपातान्तविरूढशष्पम्, गौर्याः पार्वत्याः, गुरोः पितुः, गह्वरं गुहाम्, आविवेश प्राविशत् ।

समासः—होमस्य धेनुः होमधेनुः, मुनेः होमधेनुः (ष० त०) तस्याः मुनिहोमधेनोः । आत्मनः अनुचरः आत्मानुचरः ( ष० त० ) तस्य आत्मानुचरस्य । ज्ञातुम् इच्छति जिज्ञासते, जिज्ञासते इति जिज्ञासमाना । गङ्गायाः प्रपातः गङ्गाप्रपातः, गङ्गाप्रपातस्य अन्तः गङ्गाप्रपातान्तः (ष०त०), गङ्गाप्रपातान्ते विरूढानि शष्पाणि यस्य तत् (बहु०) गङ्गाप्रपातान्तविरूढशष्पम्, तत् पुनस्तदेव । गौर्याः गुरुः गौरीगुरुः, तस्य (ष० त०) गौरीगुरोः ।

कोशः—'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' 'प्रपातस्त्वतटो भृगुः' 'शष्पं बालतृणेऽपि च' 'गुरुर्गीष्पतिपित्रादौ' 'बिले गुहा, गह्वरं' इत्यमरः ।

भावार्थः—एकेनैव क्रमेण एकविंशतिः दिनानि व्यतिक्रान्तानि । द्वाविंशे दिने धेनुः निजसेवकस्य दिलीपस्य हृदयं परीक्षितुम् इच्छन्ती गङ्गाप्रपातसमीपे यत्र बालतृणानि प्ररूढानि, तत्र गुहायां प्रविष्टा ।

हिन्दीश्लोकार्थः—बाईसवें दिन वसिष्ठ की होमसाधनीभूत नन्दिनी ने अपने सेवक दिलीप के हृदय को जानने की इच्छा करती हुई गङ्गाप्रपात के समीप उगी हुई हैं नई-नई घास जिसमें—ऐसे हिमालय की गुफा में प्रवेश किया ॥२६॥

सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥२७॥

सञ्जीविनी– सेति । सा धेनुः हिंस्रैर्व्याघ्रादिभिर्मनसाऽपि दुष्प्रधर्षा दुर्धर्षेति हेतोरद्रिशोभायां प्रहितेक्षणेन दत्तदृष्टिना नृपेणालक्षितमभ्युत्पतनमाभिमुख्येनोत्पतनं यस्य स सिंहस्तां धेनुं प्रसह्य हठात् । 'प्रसह्य तु हठार्थकम्' इत्यमरः । चकर्ष । किलेत्यलीके ।

अन्वयः—सा हिंस्रैः मनसाऽपि दुष्प्रधर्षा इति अद्रिशोभाप्रहितेक्षणेन नृपेण अलक्षिताभ्युत्पतनः सिंहः प्रसह्य तां चकर्ष किल ।

वाच्य०—तया हिंस्रैः दुष्प्रधर्षया भूयते इति नृपेण अलक्षिताभ्युत्पतनेन सिंहेन सा चकृषे किल । (कर्म०)

चन्द्रिका सा नन्दिनी, हिंस्रैः घातुकैः, सिंहव्याघ्रादिभिरिति यावत् । मनसापि अन्तःकरणेनापि. का कथा शरीरेणेत्यर्थः, दुष्प्रधर्षा दुरभिभवा, तां मनसापि धर्षितुं व्याघ्रादयो न समर्था इति भावः । इति हेतोः, अद्रिशोभायां हिमाचलसुषमायाम्, प्रहिते प्रेरिते, ईक्षणे नेत्रे, येन तेन अद्रिशोभाप्रहितेक्षणेन, नृपेण राज्ञा दिलीपेन, अलक्षितं न दृष्टम्, अभ्युत्पतनम् अभिमुखम् आक्रमणं, यस्यासौ अलक्षिताभ्युत्पतनः सिंहः केसरी, प्रसह्य हठेन प्रसभम्, चकर्ष अकर्षत्, किलेत्यलीके ।

समासः दु खेन प्रधर्षितुं शक्या, दुष्प्रधर्षा । अद्रेः शोभा अद्रिशोभा(ष०त०), अद्रिशोभायां प्रहिते ईक्षणे येन सः (बहु०) अद्रिशोभा प्रहितेक्षणः, तेन अद्रिशोभाप्रहितेक्षणेन । न लक्षितम् अलक्षितम् अभ्युत्पतनं यस्यासौ अलक्षिताभ्युत्पतनः । नॄन् पातीति नृपः, तेन नृपेण ।

कोशः—'शरारुर्घातुको हिंस्रः' 'स्वान्तं हृन्मानसं मनः' 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ।' शोभा कान्तिर्द्युतिश्छविः' सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।' 'प्रसह्य तु हठार्थकम्' 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमराः ।

भावार्थः—राजा दिलीपः मनसि 'इयं गौः सिंहादिभिः मनसाऽपि धर्षितुं न शक्या, का कथा पुनः शरीरेण धर्षणे ?' इति विचाय हिमालयस्य सुन्दरदृश्यदर्शने दत्तदृष्टिः अभवत् । तदा राज्ञा अदृष्ट एव सिंहो नन्दिन्याम् उत्पत्य तां हठात् कृष्टवानिति भावः । किलेत्यव्ययेन अभिनयमात्रमिदमिति सूच्यते ।

हिन्दीश्लोकार्थः—'यह नन्दिनी दुष्ट सिंहादिकों द्वारा मन से भी डरायी नहीं जा सकती (शरीर से तो कहना ही क्या ? ) इस कारण से हिमालय की शोभा की ओर दृष्टि लगाये हुए राजा दिलीप से जिसका आक्रमण लक्षित न हो सका, ऐसा सिंह नन्दिनी पर चढ़ कर, मानों, उसे खींचने लगा ॥२७॥

तदीयमाक्रन्दतमार्त्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

सञ्जीविनी—तदीयमिति । गुहानिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घम् । तस्या इद तदीयम् । आक्रन्दितमार्तघोषणम् आर्तेषु विपन्नेषु साधोर्हितकारिणो नृपस्य नगेन्द्रसक्तां दृष्टिम् । रश्मिषु प्रग्रहेषु 'किरणप्रग्रहौ रश्मी' इत्यमरः । आदायेव गृहीत्वेव निवर्तयामास ।

अन्वय—गुहानिबद्धप्रतिशब्ददीर्घं तदीयम् आक्रन्दितम् आर्तसाधोः नृपस्य नगेन्द्रसक्तां दृष्टिं रश्मिषु आदाय इव निवर्तयामास ।

वाच्य—गुहानिबद्धप्रतिशब्ददीर्घेण तदीयेनाक्रन्दितेन नगेन्द्रसक्ता नृपस्य दृष्टिः निवर्तयाञ्चक्रे । (कर्म०

चन्द्रिका—गुहायां कन्दरायां निबद्धेन व्याप्तेन, प्रतिशब्देन प्रतिध्वनिना दीर्घम् आयतम्, सुदूराद् श्रव्यमित्यर्थः, तस्या नन्दिन्या इयं तदीयं नन्दनीसम्बन्धि, आक्रन्दितम् आर्तनादितम् (इदं कर्तृ), आर्तेषु पीडितेषु साधोः हितकारिणः आर्तनामार्तिनाशकस्येति यावत् । नृपस्य राज्ञः, नगेन्द्रे हिमचले, सक्तां संलग्नाम्, दृष्टिं दृशं, रश्मिषु प्रग्रहेषु, रज्जुषु इति भावः, आदायेव गृहीत्वेव, निवर्तयामास आचकर्ष ।

समासः—गुहायां निबद्धः (स० त०) गुहानिबद्धश्चासौ प्रतिशब्दश्च (कर्म०)

गुहानिबद्धप्रतिशब्दः, गुहानिबद्धप्रतिशब्देन दीर्घं गुहानिबद्धप्रतिशब्ददीर्घम् (तृ०त०)। नगेषु इन्द्रः नगेन्द्रः (स० त०) नगेन्द्रे सक्ता नगेन्द्रसक्ता (स० त०), तां नगेन्द्रसक्ताम्। आर्तेषु साधु (स० त०) आर्तसाधुः, तस्य आर्तसाधोः।

कोशः—'क्रन्दितं रुदितं क्रुष्टं' 'आर्तिः पीडाधनुष्कोटयोः' 'देवखातबिले गुहा' 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' 'सुदूरं दीर्घमायतम्' 'किरणप्रग्रहो रश्मी' 'दृग्दृष्टी' इत्यमरः।

भावार्थः—सिंहाक्रमणेन कातरा नन्दिनी तारस्वरेण यदा आक्रन्दितवती तदा-तदाक्रन्दितं गुहाप्रतिध्वनितं सत् सुदूरश्रव्यं भवत् आर्तदयालो राज्ञो गिरिशोभासक्तां दृष्टिं दाम्ना बद्ध्वेव ततो निवर्तयामास।

हिन्दीश्लोकार्थः—गुंफा में टकराई हुई प्रतिध्वनि से दूरश्राव्य उस आर्तक्रन्दन से दुःखियों पर दयालु राजा दिलीप की हिमालय के दृश्यों में संलग्न दृष्टि को मानो रस्सी से खींचकर, अपनी ओर घुमा लिया ॥२८॥

स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥२९॥

सञ्जीविनी—स इति। धनुर्धरः स नृपः पाटलायां रक्तवर्णायां गवि तस्थिवांसं स्थितम्, 'क्वसुश्च' इति क्वसुप्रत्ययः। केसरिणं सिंहम्। सानुमतोऽद्रेः। धातोर्गैरिकस्य विकारो धातुमयी तस्यामधित्यकायामूर्ध्वभूमौ 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः। प्रफुल्लो विकसितस्तम्। 'फुल्ल विकसने' इति धातोः पचाद्यच्। 'प्रफुल्तम्' इति तकारपाठे 'ञिफला विशरणे' इति धातोः कर्त्तरि क्तः 'उत्परस्यातः' इत्युदादेशः। लोध्राख्यं द्रुममिव ददर्श।

अन्वयः—धनुर्धरः सः पाटलायां गवि तस्थिवांसं केसरिणं सानुमतः धातुमय्याम् अधित्यकायां प्रफुल्लं लोध्रद्रुमम् इव ददर्श।

वाच्य०—धनुर्धरेण तेन गवि तस्थिवान् केसरी प्रफुल्लो लोध्रद्रुम इव ददृशे। (कर्म०)

चन्द्रिका—धनुर्धरः चापधारी, सः राजा दिलीपः, पाटलायां श्वेताभरक्तवर्णायाम्, 'श्वेतरक्तस्तु पाटलः' इत्यमरः, गवि धेनौ, तस्थिवांसं स्थितवन्तम्, केसरिणं सिंहं, सानुमतः पर्वतस्य, धातुमय्यां गैरिकादिप्रचुरायाम्, अधित्यकायाम् अद्रेरूर्ध्वभूमौ, प्रफुल्लं विकचम्, लोध्रद्रुमं लोध्राभिधं तरुम्, इव यथा, ददर्श व्यलोकयत्। गोः पाटलवर्णायाः धातुमयभूमेः तथा सिंहलोध्रवृक्षयोः उपमानोपमेयभावः।

समासः—धरतीति धरः, धनुषो धरः धनुर्धरः। धातोर्विकारो धातुमयी, तस्यां धातुमय्याम्। केसरा अस्य सन्तीति केसरी, तं केसरिणम्। लोध्र इति

द्रुमः ( संभावनापूर्वपदकर्म० ) लोध्रद्रुमः, तं लोध्रद्रुमम्। सानवोऽस्य सन्तीति सानुमान्, तस्य सानुमतः।

कोशः—'श्वेतरक्तस्तु पाटलः' 'धन्वी धनुष्मान् धानुष्को निषंगयस्त्री धनुर्धरः।' 'गौरुस्रा माता च शृङ्गिणी' 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः।' 'स्नुः प्रस्थः सानुरस्त्रियाम्' 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इति चामराः।

भावार्थः—धनुर्धारी राजा पाटलवर्णां नन्दिनीमाक्रम्य आसीनं सिंहं पर्वतस्योर्ध्वं धातुभूमौ विकसितं लोध्रवृक्षमिव अपश्यत्।

हिन्दीश्लोकार्थः—धनुर्धारी राजा दिलीप ने सफेदी लिये लालरंग वाली नन्दिनी गाय पर घेरकर बैठे हुए सिंह को पर्वत की धातुमयी ऊँची भूमि पर विकसित हुए लोध्रवृक्ष की भाँति देखा ॥२९॥

ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः।
जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत् प्रसभोद्धृतारिः ॥३०॥

सञ्जीविनी—तत इति। ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी 'शरणं गृहरक्षित्रोः' इत्यमरः। 'शरणं रक्षणे गृहे' इति यादवः। शरणे साधुः शरण्यः। 'तत्र साधुः' इति यत्प्रत्ययः। प्रसभेन बलात्कारेणोद्धृता अरयो येन स नृपती राजा जाताभिषङ्गो जातपराभवः सन्। 'अभिषङ्गः पराभवे' इत्यमरः। वध्यस्य वधार्हस्य। 'दण्डादिभ्यो यः' इति यप्रत्ययः। मृगेन्द्रस्य वधाय निषङ्गात्तूणीरात्। 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः। शरमुद्धर्त्तुमैच्छत्।

अन्वयः—ततो मृगेन्द्रगामी शरण्यः प्रसभोद्धृतारिः नृपतिः जाताभिषङ्गः 'सन्' वध्यस्य मृगेन्द्रस्य वधाय निषङ्गात् शरम् उद्धर्तुम् ऐच्छत्।

वाच्य०—मृगेन्द्रगामिना शरण्येन प्रसभोद्धृतारिणा नृपतिना जाताभिषङ्गेण 'सता' शरम् उद्धर्तुम् ऐष्यत। (भाव०)

चन्द्रिका—ततः सिंहविलोकनानन्तरम्, मृगेन्द्रगामी सिंहगमनः, शरण्यः शरणागतहितकारी, प्रसभं बलात्, उद्धृताः विनाशिताः—उन्मूलिताः, अरयः शत्रवः, येन सः प्रसभोद्धृतारिः, परमिदानीं शत्रुः सम्मुखे वर्तते इति भावः, नृपतिः राजा दिलीपः, जातः उत्पन्नः, अभिषङ्गः पराजयः यस्य सः जाताभिषङ्गः, सन् भवन्, वध्यस्य मारणार्हस्य, मृगेन्द्रस्य सिंहस्य, वधाय हननाय, निषङ्गात् तूणात्, शरकोशादित्यर्थः, शरं बाणम्, उद्धर्तुम् उत्थापयितुम्, ऐच्छत् अवाञ्छत्। केवलम् इच्छाम् अकरोत्, किन्तु समर्थो नाभूदिति भावः।

समासः—मृगाणाम् इन्द्रः मृगेन्द्रः, मृगेन्द्र इव गच्छतीति मृगेन्द्रगामी। मृगाणाम् इन्द्रः मृगेन्द्रः, तस्य मृगेन्द्रस्य। वधमर्हतीति वध्यः, तस्य वध्यस्य।

शरणे साधुः शरण्यः । जातः अभिषङ्गः यस्य सः जाताभिषङ्गः । प्रसभम् ( क्रि० विशेषणमिदम्) प्रसभेन वा उद्धृताः अरयः येन सः प्रसभोद्धृतारिः ।

कोशः—'कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः' 'प्रसभं तु बलात्कारो हठः' 'शरणं गृहरक्षित्रोः' इत्यमरः । 'शरणं रक्षणे गृहे' इति यादवः । 'अभिषङ्गः पराभवे' 'आलम्भपिञ्जविशरघातोन्माथवधा अपि' वध्यः शीर्षच्छेद्य इमौ समौ' 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इति चामराः ।

भावार्थः—सिंहः सम्मुखे वर्तते चेदयं सिंहगमनः, शरणागतरक्षकः, बलात्कारेण कृतशत्रुनाशनः राजा सिंहाक्रमणेन स्वस्य पराभवः अभूत् इति कृतानुभवः, नन्दिन्या उपरि आक्रमणकारिणः सिंहस्य वधाय तूणीरात् शरमुत्थापयितुम् इच्छां कृतवान् केवलम्, शरमुद्धर्तुं न शशाकेति भावः ।

हिन्दीश्लोकार्थः—सिंह को देखने के बाद सिंह का भांति मन्द-गम्भीर पद रखने वाले शरणागतरक्षक शत्रुओं का बलपूर्वक नाश किये हुए, हार पाये हुए ( आज सिंह के आक्रमण से ) राजा दिलीप ने वधार्ह सिंह को मारने के लिए तरकस से बाण निकालना चाहा ॥ २० ॥

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥२१॥

सञ्जीविनी—वामेतर इति । प्रहर्तुस्तस्य वामेतरो दक्षिणः करः नखप्रभाभिर्भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्य तस्मिन् । 'कङ्कः पक्षिविशेषे स्याद् गुप्ताकारे युधिष्ठिरे' इति विश्वः । 'कङ्कस्तु कर्कट' इति यादवः । सायकस्य पुङ्ख एव कर्तर्याख्ये मूलप्रदेशे । 'कर्तरिः पुङ्खे' इति यादवः । सक्ताङ्गुलिः सन् । चित्रार्पितारम्भश्चित्रलिखितशरोद्धरणोद्योग इव अवतस्थे ।

अन्वयः—प्रहर्तुः तस्य वामेतरः करः नखप्रभाभूषितकङ्कपत्रे सायकपुङ्खे एव सक्ताङ्गुलिः 'सन्' चित्रार्पितारम्भ इव अवतस्थे ।

वाच्य०—प्रहर्तुः तस्य वामेतरेण करेण सायकपुङ्खे एव सक्ताङ्गुलिना चित्रार्पितारम्भेणेव अवतस्थे । (भाव.)

चन्द्रिका—प्रहर्तुः ताडयितुः, तस्य दिलीपस्य, वामेतरः दक्षिणः, करः हस्तः, नखप्रभाभिः नखरकान्तिभिः भूषितानि अलंकृतानि, नखप्रभावर्णं प्रापितानीति भावः । कङ्कस्य विहगविशेषस्य, पत्राणि पक्षाः, यस्य तस्मिन् नखप्रभाभूषितकङ्कपत्रे । बाणेषु कङ्कपत्रबन्धनं बाणानां त्वरितगमनार्थम् । सायकस्य बाणस्य, पुङ्खे एव 'कर्तरी' इति ख्यातमूलभाग एव । सक्ताङ्गुलिः सलग्नाङ्गुलीकः, 'सन्' चित्रे आलेख्ये, अर्पित तूलिकया विलिखितः, आरम्भः उद्योगः, यस्य सः चित्रार्पितारम्भः चित्रलिखितशरोत्थापनव्यापारः, इव यथा, अवतस्थे अतिष्ठत् । करः धृतबाणमुष्टिः जडवत् स्थित इति भावः ।

समासः—वामाद् इतरः वामेतरः (ष०त०)। प्रहरतीति प्रहर्ता, तस्य प्रहर्तुः। नखानां प्रभाः (ष० त०) नखप्रभाः, नखप्रभाभिः भूषितानि (तृ० त०) नखप्रभाभूषितानि, कङ्कस्य पत्राणि कङ्कपत्राणि, नखप्रभाभूषितानि कङ्कपत्राणि यस्य सः नखप्रभाभूषितकङ्कपत्रः, तस्मिन् नखप्रभाभूषितकङ्कपत्रे (बहु०)। सायकस्य पुङ्खः सायकपुङ्खः (ष०त०) तस्मिन् सायकपुङ्खे। सक्ताः अङ्गुलयः यस्य सः (बहु०) सक्ताङ्गुलिः, चित्रे अर्पितः आरम्भः यस्य सः चित्रार्पितारम्भः।

कोशः—'वामं शरीरं सव्यं स्यादपसव्यन्तु दक्षिणम्।' 'इतरस्त्वन्यनीचयोः' 'बलिहस्तांशवः कराः' 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः। 'पत्रन्तु वाहने पर्णे पक्षे च शरपक्षिणोः' इति विश्वः। 'कर्तरिः पुङ्खे' इति यादवः। 'अङ्गुल्यः करशाखाः स्युः' 'आलेख्याश्चर्ययोश्चित्रम्' इति चामरो।

भावार्थः—प्रहारार्थं निषङ्गात् शरोद्धरणार्थं शरमूले निहितो दिलीपस्य दक्षिणहस्तः चित्रलिखितबाणोद्धरणव्यापार इव निश्चलः स्थितः।

हिन्दीश्लोकार्थः—प्रहार करने वाले राजा दिलीप का दाहिना हाथ अपने नख की प्रभा से अलङ्कृत एवं कंकपक्षी के पंख जिसमें लगे हुए हैं ऐसी बाण की मूँठ में ही लगी हुई हैं अंगुलियाँ जिसको, ऐसा होकर चित्र में लिखित बाण निकालने के उद्योग में लगे हुए की भाँति रह गया ॥३१॥

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥३२॥

सञ्जीविनी—बाहुप्रतिष्टम्भेति। बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन। 'प्रतिबन्ध प्रतिष्टम्भः' इत्यमरः। विवृद्धमन्युः प्रवृद्धरोषो राजा। मन्त्रौषधिभ्यां रुद्धवीर्य प्रतिबद्धशक्तिर्भोगी सर्प इव 'भोगी राजभुजङ्गयोः' इति शाश्वतः। अभ्यर्णमन्तिकम्। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः। आगस्कृतमपराधकारिणमस्पृशद्भिः स्वतेजोभिरन्तरदह्यत। 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि' इति यादवः।

अन्वयः—बाहुप्रतिष्टम्भविवृद्धमन्युः राजा मन्त्रौषधिरुद्धवीर्यः भोगीव अभ्यर्णम् आगस्कृतम् अस्पृशद्भिः स्वतेजोभिः अन्तरदह्यत।

वाच्य०—बाहुप्रतिष्टम्भविवृद्धमन्युं राजानं मन्त्रौषधिरुद्धवीर्यं भोगिनम् इव अभ्यर्णमागस्कृतम् अस्पृशन्ति स्वतेजांसि अन्तरदहन्। (कर्म०)

चन्द्रिका—बाह्वोः भुजस्य, प्रतिष्टम्भेन प्रतिबन्धन, विवृद्धः समेधितः, मन्युः क्रोधः, यस्य सः बाहुप्रतिष्टम्भविवृद्धमन्युः, राजा दिलीपः, मन्त्रौषधिभ्यां गरुडमन्त्रभेषजाभ्यां, रुद्धं प्रतिबद्धम्, वीर्यं प्रभावः सामर्थ्यं, यस्य एवम्भूतः, भोगीव सर्पो यथा, अभ्यर्णम् समीपे, आगस्कृतम् अपराधकारिणम्, अस्पृशद्भिः किमप्यकुर्वद्भिः, स्वतेजोभिः निजोजोभिः आत्मवीर्यैः, अन्तः अभ्यन्तरे, अदह्यत अतप्यत। शत्रुं किमप्यकुर्वन्ति निजतेजांसि स्वात्मानमेव समतापयन् इति भावः।

समासः—बाहोः प्रतिष्टम्भः (ष०त०) बाहुप्रतिष्टम्भः, बाहुप्रतिष्टम्भेन विवृद्धः मन्युः यस्य सः बाहुप्रतिष्टम्भविवृद्धमन्युः (बहु०)। मन्त्रश्च औषधिश्च मन्त्रौषधी (द्वन्द्वस०) मन्त्रौषधिभ्यां रुद्धं वीर्यं यस्य सः (बहु०) मन्त्रौषधिरुद्धवीर्यः। भोगः (अहिशरीरम्) अस्यास्तीति भोगी। न स्पृशन्ति अस्पृशन्ति, तैः 'अस्पृशद्भिः'। स्वस्य तेजांसि स्वतेजांसि (ष० त०), तैः स्वतेजोभिः।

कोशः—'भुजबाहू प्रवेष्टो दोः' 'मनुर्दैन्ये क्रतौ क्रुधि' 'आगोऽपराधो मन्युश्च' 'उरगः पन्नगो भोगी' 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' 'अहेः शरीरं भोगः स्यात्' इत्यमराः।

भावार्थः—भुजसस्तम्भेन प्रवृद्धक्रोधः दिलीपः सम्मुखस्थमपि शत्रुं सिंहं हन्तुमसमर्थो गारुडमन्त्रेण औषध्या वा निरुद्धप्रभावः सर्प इव निजतेजोभिः स्वयमन्तस्तापम् अन्वभवत्।

हिन्दीश्लोकार्थः—हाथ के रुक जाने से बढ़े हुए क्रोधवाले राजा दिलीप, गरुड़मन्त्र और औषधि से बेकार कर दिया गया है जहर जिसका ऐसे सर्प की भाँति पास में ही स्थित अपराधी को कुछ भी नहीं करने वाले अपने तेजों से आप ही भीतर जलने लगे ॥३२॥

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥३३॥

सञ्जीविनी—तमिति। निगृहीता पीडिता धेनुर्येन स सिंहः। आर्याणां सतां गृह्यं पक्ष्यम् 'पदास्वैरिबाह्यापक्ष्येषु च' इति क्यप्। मनुवंशस्य केतुं चिह्नं केतुवद्व्यावर्तकम्। सिंह इवोरुसत्त्वो महाबलस्तम्। आत्मनो वृत्तौ बाहुस्तम्भरूपे व्यापारेऽभूतपूर्वत्वाद्विस्मितम्। कर्तरि क्तः। तं दिलीपं मनुष्यवाचा करणेन पुनर्विस्माययन्विस्मयमाश्चर्यं प्रापयन्निजगाद। 'स्मिङ् ईषद्धसने' इति धातोर्णिचि वृद्धावायादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम्। 'विस्मापयन्' इति पाठे पुगागममात्रं वक्तव्यम्। तच्च 'नित्यं स्मयतेः' इति हेतुभयविवक्षायामेवेति 'भीस्म्योर्हेतुभये' इत्यात्मनेपदे 'विस्मापयमान' इति स्यात्। तस्मान्मनुष्यवाचा विस्माययन्निति शुद्धम्। करणविवक्षायां न कश्चिद्दोषः।

अन्वयः—निगृहीतधेनुः सिंहः आर्यगृह्यं मनुवंशकेतुं सिंहोरुसत्त्वम् आत्मवृत्त्या विस्मितं सं मनुष्यवाचा विस्माययन् निजगाद।

वाच्य०—निगृहीतधेनुना सिंहेन आर्यगृह्यो मनुवंशकेतुः सिंहोरुसत्त्वः विस्मितः सः विस्माययता निजगदे। (कर्म०)

चन्द्रिका—निगृहीता आक्रान्ता, धेनुः नन्दिनी, येन सः, सिंहः केसरी, आर्याणां सज्जनानां, गृह्यं पक्षपातिनम्, मनुवंशस्य वैवस्वतमनुकुलस्य, केतुं ध्वजं श्रेष्ठमित्यर्थः। सिंह इव मृगेन्द्र इव, उरुसत्त्वम् अधिकबलम्, आत्मवृत्तौ निजबाहुस्तम्भरूपे व्यापारे, विस्मितम् आश्चर्यचकितम्, तं दिलीपं, मनुष्यवाचा मान

वाण्या, विस्माययन् पुनः विस्मयं लम्भयन्, द्विगुणितं विस्मितं कुर्वन्नित्यर्थः। निजगाद अब्रवीत्।

समासः—निगृहीता धेनुः येन सः (बहु०) निगृहीतधेनुः। आर्याणां गृह्यः आर्यगृह्यः, (ष०त०) तम् आर्यगृह्यम्। मनोः वंशः मनुवंशः, मनुवंशस्य केतुः मनुवंशकेतुः (ष०त०) तं मनुवंशकेतुम्। सिंहस्य इव उरु सत्त्वं यस्य सः (बहु०) यद्वा उरु सत्त्वं यस्य सः उरुसत्त्वः (बहु०), सिंह इव उरुसत्त्वः सिंहोरुसत्त्वः (उपमानपूर्वपदकर्म०) तं सिंहोरुसत्त्वम्। आत्मनः वृत्तिः (ष०त०) आत्मवृत्तिः, तस्याम् आत्मवृत्तौ।

कोशः—'धेनुः स्यान्नवसूतिका' 'बढोरु विपुलं पीनं' 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु।' इत्यमरः।

भावार्थः—आक्रान्तधेनुः सिंहः निजबाहुस्तम्भरूपे व्यापारे आश्चर्यान्वितं दिलीपं मनुष्यवाचा वक्तुमुपक्रममाणः इतोऽप्याश्चर्यचकितं चकार।

हिन्दीश्लोकार्थः—नन्दिनी पर आक्रमण किया हुआ सिंह, सज्जनों के पक्षपाती, मनुवंश के केतुरूप (श्रेष्ठ) सिंह जैसे पराक्रमी और अपने हाथ के रुकने से आश्चर्य करने वाले राजा दिलीप को मनुष्यवाणी से बोलता हुआ पुनः आश्चर्य चकित कर दिया ॥ ३३ ॥

अलं महीपाल ! तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥३४॥

सञ्जीविनी—अलमिति। हे महीपाल ! तव श्रमेणालम् न साध्याभावात् श्रमो न कर्त्तव्य इत्यर्थः। अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात्तृतीया। उक्तं च न्यासोद्द्योते 'न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य। अपि तर्हि गम्यमानाऽपि' इति। 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। इतोऽस्मिन्मयि। सार्वविभक्तिकस्तसिः। प्रयुक्तमप्यस्त्रं वृथा स्यात्। तथा हि—पादपोन्मूलने शक्तिर्यस्य तत्तथोक्तं, मारुतस्य रंहो वेगः, शिलोच्चये पर्वते न मूर्च्छति न प्रसरति।

अन्वयः—हे महीपाल ! तव श्रमेण अलम्, इतः प्रयुक्तमपि अस्त्रं वृथा स्यात्, पादपोन्मूलनशक्ति मारुतस्य रंहः शिलोच्चये न मूर्च्छति।

वाच्य०—इतः प्रयुक्तेनाप्यस्त्रेण वृथा भूयेत, पादपोन्मूलनशक्तिना मारुतस्य रंहसा शिलोच्चये न मूर्च्छ्यते। (भाव०)

चन्द्रिका—हे महीपाल ! भूपते ! तव ते, श्रमेण प्रयासेन, अलं साध्यं नास्ति इत्यर्थः। इतः अस्मिन् मयि, सप्तम्यर्थे तसिः, प्रयुक्तमपि प्रक्षिप्तमपि, अस्त्रं बाणः, वृथा व्यर्थं, स्यात् भवेत्। पादपानां तरूणाम्, उन्मूलने उत्पाटने, शक्तिः सामर्थ्यं, यस्य तत् तथोक्तं मारुतस्य प्रभञ्जनस्य, रंहः वेगः, शिलोच्चये पर्वते, न मूर्च्छति व

प्रसरति। मारुतः पादपान् उन्मूलयितुं शक्तोऽपि पर्वते स न किमपि कर्तुं शक्नोति इत्यर्थः।

समासः—महीं पालयतीति महीपालः, तत्संबुद्धौ हे महीपाल ! । पादैः पिबन्तीति पादपाः। पादपानाम् उन्मूलनम् ( ष० त० ) पादपोन्मूलनम्, पादपोन्मूलने शक्तिः यस्य तत् ( बहु० ) पादपोन्मूलनशक्ति ( क्लीबमिदं रंहसो विशेषणम् )। शिलाभिरुच्चीयते इति शिलोच्चयः, तस्मिन् शिलोच्चये।

कोशः—'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' 'अस्त्रमायुधलोहयोः' 'पादपस्तरुः' 'समीरमारुतमरुत्' 'रंहस्तरसी तु रयः स्यदः' 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः।' इत्यमरः।

भावार्थः—सिंहो वदति दिलीपम् हे राजन् ! मां प्रहर्तुं श्रमं मा कुरु, यतः प्रयोक्तुम् असमर्थोऽसि साम्प्रतम्। कदाचित् समर्थोऽपि भवेः चेत् तदस्त्रं मम किं न कुर्यात्। वायोः यो वेगः तरून् उन्मूलयितुं शक्नोति सः पर्वते किमपि कर्तुं प्रभवेत्। तथैव त्वमपि मयि किमपि कर्तुं न प्रभवसि इति भावः।

हिन्दीश्लोकार्थः—हे राजन् ! तुम्हारा प्रयास बस है, मुझपर छोड़ने पर भी अस्त्र व्यर्थ होगा। वायु का वेग पेड़ों को उखाड़ता है, पर्वत पर कुछ नहीं कर सकता है ॥ ३४ ॥

कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम्।
अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥३५॥

सञ्जीविनी—कैलासेति। कैलास इव गौरः शुभ्रस्तम्। 'चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः' इति शाश्वतः। वृषं वृषभमारुरुक्षोरारोढुमिच्छोः। स्वस्यां पदं निक्षिप्य वृषमारोहतीत्यर्थः। अष्टौ मूर्त्तयो यस्य सः, तस्याष्टमूर्त्तेः शिवस्य पादार्पणं पादन्यासस्तदेवानुग्रहः प्रसादस्तेन पूतं पृष्ठं यस्य तं तथोक्तम्। निकुम्भमित्रं कुम्भोदरं नाम किङ्करं मामवेहि विद्धि। 'पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्त्तयः' इति यादवः।

अन्वयः—कैलासगौरं वृषम् आरुरुक्षोः अष्टमूर्तेः पादार्पणानुग्रहपूतपृष्ठं निकुम्भमित्रं कुम्भोदरं नाम किङ्करं माम् अवेहि।

वाच्य०—पादार्पणानुग्रहपूतपृष्ठो निकुम्भमित्रं कुम्भोदरः किङ्करोऽहं त्वया ( कर्म० )।

चन्द्रिका—कैलास इव रजताद्रिरिव, श्वेतं शुभ्रम्, वृषं वृषभम्, नन्दिनं यावत्, आरुरुक्षोः आरोढुमिच्छोः, अष्टमूर्तेः रुद्रस्य, पादार्पणं चरणन्यासः, पाद एव अनुग्रहः कृपाकार्यं, तेन पूतं पवित्रं पृष्ठं तनुपश्चाद्भागः 'पृष्ठन्तु चरमं' इत्यमरः, यस्य सः तं पादार्पणानुग्रहपूतपृष्ठम्, निकुम्भस्य तन्नामकप्रमथविशेषस्य मित्रं सखायम्, कुम्भोदरं नाम कुम्भोदर-इति प्रसिद्धम्, किङ्करं भृत्यम्, माम् अवेहि जानीहि।

समासः—कैलास इव गौरः ( उपमानपूर्वपदकर्म० ) कैलासगौरः, तं कैलासगौरम्। आरोढुम् इच्छुः आरुरुक्षुः, तस्य आरुरुक्षोः। अष्टौ मूर्तयो यस्य सः अष्टमूर्तिः, तस्य अष्टमूर्तेः। पादयोरर्पणं पादार्पणम् ( ष० त० ) पादार्पणमेवानुग्रहः पादार्पणानुग्रहः, पादार्पणानुग्रहेण पूतं पृष्ठं यस्य सः ( बहु० ) पादार्पणानुग्रहपूतपृष्ठः, तं पदार्पणानुग्रहपूतपृष्ठम्। निकुम्भस्य मित्रं निकुम्भमित्रम्, तत् पुनस्तद्वत्।

कोशः—'गौरो वलक्षो धवलोऽर्जुनः' 'अहिर्बुध्न्योऽष्टमूर्तिश्च' 'पूतं पवित्रं मेध्यं च' 'पृष्ठन्तु चरम तनोः' 'नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः' इत्यमराः।

भावार्थ—सिंहः स्वपरिचयं ददाति। कैलासवद् गौर नन्दिकेश्वरं यदा शिव आरोहति तदा मत्पृष्ठे पादौ धृत्वा तमस्तमारोहति, एतेन शिवानुग्रहेण पवित्रपृष्ठभागः अहं निकुम्भसुहृत् कुम्भोदरोऽस्मि। इति मां मन्यस्व।

हिन्दीश्लोकार्थः—दिलीप! कैलासाचल जैसे गोरे बैल पर चढ़ने की इच्छा करने वाले शिवजी के चरणन्यासरूपी अनुग्रह से पवित्र है पीठ जिसकी, निकुम्भ मित्र 'कुम्भोदर' नाम से प्रसिद्ध मुझे शंकरजी का किंकर समझो ॥ ३५ ॥

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥३६॥

सञ्जीविनी—अमुमिति। 'पुरोऽग्रतोऽमुं देवदारुं पश्यसि' इति काकुः। असौ देवदारुः। वृषभो ध्वजो यस्य स तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः। अभूततद्भावे च्विः। यो देवदारुः स्कन्दस्य मातुर्गौर्या हेम्नः कुम्भ एव स्तनस्तस्मान्निःसृतानां पयसामम्बूनां रसज्ञः, स्कान्दपक्षे—हेमकुम्भ इव स्तन इति विग्रहः। पयसां क्षीराणाम् 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। स्कन्दसमानप्रेमास्पदमिति भावः।

अन्वयः—अमुं पुरः देवदारुं पश्यसि ? असौ वृषभध्वजेन पुत्रीकृतः 'अस्ति' यः स्कन्दस्य हेमकुम्भस्तननिःसृतानां मातुः पयसां रसज्ञः 'अस्ति'।

वाच्य०—असौ देवद्रारुः त्वया दृश्यते ? अमुं वृषभध्वजः पुत्रीकृतवान्, येन स्कन्दस्य मातुः पयसां रसज्ञेन 'भूयते'। ( भाव० )

चन्द्रिका—पुरः अग्रतः अमुम् इमम् देवदारुं देवदारुतरुम्, पश्यसि विलोकयसि इति काक्वा पश्यसि इत्यवधारणम्। असौ एषः, इदम्-एतद्-अदसाम् अर्थे कश्चिद्वैलक्षण्यं वर्तते, क्वचिच्च पुरोवर्तित्ववाचकास्त्रयोऽपि, प्रकृते तथैव। वृषभध्वजेन रुद्रेण, पुत्रीकृतः सुतत्वेन अभ्युपगतः। यः देवदारुः, स्कन्दस्य कुमारस्य, मातुः पार्वत्याः, हेमकुम्भः कनकघटः, एव स्तनः पयोधरः, तस्मात् हेमकुम्भस्तनात्, निस्सृतानां निर्गतानाम्, पयसां जलानाम्, रसज्ञः रुचिविद्। अस्तीति शेषः। पार्वती स्तनसदृशेन कनकघटेन स्वयं जलमासिच्य एनं पोषितवतीत्यर्थः। कुमारोऽपि कनकघटसदृशस्तननिर्गतानां पयसां दुग्धानां रसज्ञः स्वादवित्।

समासः—अपुत्रः पुत्रः सम्पद्यमानः कृतः पुत्रीकृतः। वृषभः ध्वजे ध्वजो वा यस्य स वृषभध्वजः (बहु०), तेन वृषभध्वजेन। हेम्नः कुम्भो हेमकुम्भः (ष०त०),

हेमकुम्भ एव स्तनः हेमकुम्भस्तनः, हेमकुम्भस्तनात् निस्सृतानि हेमकुम्भस्तननिस्सृतानि, तेषां हेमकुम्भस्तननिस्सृतानाम् । स्कन्दपरतायाम्-हेमकुम्भ इव स्तनौ हेमकुम्भस्तनौ, हेमकुम्भस्तनाभ्यां निस्सृतानि, तेषाम् । रसं जानातीति रसज्ञः ।

कोशः—'स्यात्पुरः पुरतोऽग्रतः' 'क्रतुध्वंसी वृषध्वजः' 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इत्यमरः । 'रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः' इति विश्वः ।

भावार्थः—पुरः स्थितः असौ देवदारुः शिवस्य पुत्रवत् प्रियोऽस्ति । स्वयं पार्वती स्तनसदृशेन कनकघटेन जलमासिच्य एनं पोषितवती इति भावः ।

हिन्दीश्लोकार्थः—तुम आगे स्थित देवदारु वृक्ष को देखते हो ? यह शिवजी से पुत्रत्वेन स्वीकृत हुआ है तथा स्कन्द की माता पार्वतीजी के स्तनसदृश कनकघट से निकले जलका स्वाद जाननेवाला है। अर्थात् पार्वतीजी ने अपने हाथ से सोने के घड़े से जल सींचकर इसका संवर्धन किया है ॥३६॥

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥३७॥

सञ्जीविनी—कण्डूयेति । कदाचित्कटं कपोलं कण्डूयमानेन घर्षयता । 'कण्ड्वादिभ्यो यक्' इति यक्, ततः शानच् । वन्यद्विपेनास्य देवदारोस्त्वगुन्मथिता । अथाद्रेस्तनया गौरी, असुरास्त्रैरालीढं क्षतम् । सेनां नयतीति सेनानीः स्कन्दः । 'पार्वतीनन्दनः स्कन्दः सेनानीः' इत्यमरः । 'सत्सूद्विष०' इत्यादिना क्विप् । तमिव, एनं देवदारुं शुशोच ।

अन्वयः—कदाचित् कटं कण्डूयमानेन वन्यद्विपेन अस्य त्वग् उन्मथिता । अथ अद्रेः तनया असुरास्त्रैः आलीढं सेनान्यम् इव एनं शुशोच ।

वाच्य०—कण्डूयमानो वन्यद्विपोऽस्य त्वचम् उन्मथितवान् (कर्तृ०) अथाद्रेस्तनयया असुरास्त्रैः आलीढः सेनानीरिव एष शुशुचे । ( कर्म० )

चन्द्रिका—कदाचित् जातुचन, कटं गण्डस्थलम्, कण्डूयमानेन घर्षयता, खर्जयता वन्यद्विपेन आरण्यकगजेन, अस्य देवदारुवृक्षस्य, त्वग् वल्कलम्, उन्मथिता विदारिता । अथ तदा, अद्रेः तनया पार्वती, असुरास्त्रैः दैत्यशरैः, आलीढम् विद्धम्, क्षतविक्षतमिति भावः । सेनान्यम् स्कन्दम्, इव—यथा, एनं देवदारुम्, शुशोच शोचति स्म । विदारितत्वचमेनं देवदारुं विलोक्य, असुरास्त्रक्षतं स्कन्दं दृष्ट्वा पार्वत्याः यथा शोकः समभूत् तथैव खेदोऽभूदित्यर्थः ।

समास—कण्डूयते इति कण्डूयमानः, तेन कण्डूयमानेन । वने भवः वन्यः वन्यश्चासौ द्विपश्च वन्यद्विपः, ( कर्म० ) तेन वन्यद्विपेन । सेनां नयतीति सेनानीः, तं सेनान्यम् । असुराणाम् अस्त्राणि असुरास्त्राणि, तैः असुरास्त्रैः ( ष०त० ) ।

कोश—'कदाचिद् जातु सार्धन्तु' 'गण्डः कटो मदो दानम्' 'द्विरदोऽनेकपो द्विपः' 'त्वक् स्त्री वल्कं वल्कलमस्त्रियाम्' 'सेनानीरग्निभूर्गुहः' इति चामरः ।

भावार्थः—कदाचित् वन्यो हस्ती गण्डस्थलं कण्डूयमानः अस्य देवदारोः त्वचम् विदारितवान्। तदा पार्वत्याः विदारितत्वचं देवदारुं विलोक्य तावान् विषादो जातः यावान् युद्धे असुरास्त्रक्षतं स्कन्दं विलोक्य जात आसीत्।

हिन्दीश्लोकार्थः—कभी अपने गण्डस्थल को ( खुजली शान्त करने के लिए ) रगड़ते हुए जंगली हाथी ने इस देवदारु वृक्ष की छाल उधेड़ डाली। इसे देखकर पार्वतीजी ने उतना दुःख मनाया जितना कि युद्ध में असुरों के अस्त्रों से क्षत स्कन्द को देखकर मनाया था ॥ ३७ ॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥३८॥

सञ्जीविनी—तदेति। तदा तत्कालः प्रभृतिरादिर्यस्मिन्कर्मणि तत्तथा तदाप्रभृत्येव वनद्विपानां त्रासार्थं भयार्थं शूलभृता शिवेन, अङ्कं समीपमागताः प्राप्ताः सत्त्वाः प्राणिनो वृत्तिर्यस्मिस्तत् 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः' इति केशवः। सिंहत्वं विधाय। अस्मिन्नद्रिकुक्षौ गुहायामहं व्यापारितो नियुक्तः।

अन्वयः—तदाप्रभृत्येव वनद्विपानां त्रासार्थम् शूलभृता अङ्कागतसत्त्ववृत्ति सिंहत्वं विधाय अस्मिन् अद्रिकुक्षौ अहं व्यापारितः।

वाच्य०—शूलभृत् मां व्यापारितवान् ( अन्यत् सर्वं कर्मवाच्य इवात्र कर्तृवाच्येऽपि समानम् )।

चन्द्रिका—तदाप्रभृत्येव तं कालमारभ्यैव, क्रियाविशेषणमेतत्। वनद्विपानाम् अरण्यगजानाम्, त्रासार्थं भयाय, शूलभृता शूलपाणिना शिवेन, अङ्कं समीपम्, आगताः आयाताः, सत्त्वाः प्राणिनः वृत्तिः भोजनं, यस्मिन् तत्, सिंहत्वं मृगेन्द्रत्वम्, विधाय सम्पाद्य, अस्मिन् एतस्मिन्, अद्रिकुक्षौ पर्वतोदरे, गह्वरे इति यावत्। अहं कुम्भोदरः, व्यापारितः प्रयोजितः। प्रमथगणान्यतमं मां पार्वतीमनःसान्त्वनाय शिवः समीपागतप्राणिमात्राहारं सिंहं सम्पाद्य वन्यहस्तित्रासनाय अत्र नियुक्तवानित्यर्थः।

समासः—तदा प्रभृतिः यस्मिन् कर्मणि तत् तदाप्रभृति ( क्रियावि० अव्ययवत् ) वनस्य द्विपाः वनद्विपाः ( ष० त० ), तेषां वनद्विपानाम्। त्रासायेति त्रासार्थम् ( अस्वपदविग्रहः )। शूलं बिभर्तीति शूलभृत्, तेन शूलभृता। अङ्कम् आगताः सत्त्वाः वृत्तिः यस्मिन् तत् ( बहु० ) अङ्कागतसत्त्ववृत्ति, तत् पुनस्तद्वत्। सिंहस्य भावः सिंहत्वम्, तत् सिंहत्वम्। अद्रेः कुक्षिः अद्रिकुक्षिः, तस्मिन् अद्रिकुक्षौ।

कोशः—'चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम्।' 'उत्सङ्गचिह्नयोरङ्कः' 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' 'वृत्तिर्वर्तनजीवने' 'पिचण्डकुक्षी जठरोदरं तुन्दम्' इति चामराः।

भावार्थः—पार्वतीशोकसमयादेव भवो वन्यहस्तिनां भयार्थं मामत्र सिंहं

विधाय नियुक्तवान् । शिव इदमपि माम् आदिष्टवान् यत् 'तव समीपमागताः प्राणिन एव भोजनम्' इति ।

हिन्दीश्लोकार्थः—उसी समय से लेकर जंगली हाथियों को डराने के लिये, शिवजी ने, समीप आये हुए प्राणियों पर ही भोजन निर्वाह करनेवाला सिंह-स्वरूप मुझे देकर इस पहाड़ की गुफा में नियुक्त किया है ॥ ३८ ॥

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥३९॥

सञ्जीविनी—तस्येति । परमेश्वरेण प्रदिष्टो निर्दिष्टकालो भोजनवेला यस्याः सोपस्थिता प्राप्तैषा गोरूपा शोणितपारणा रुधिरस्य व्रतान्तभोजनं, सुरद्विषो राहोः, चन्द्रमस इयं चान्द्रमसी सुधेव, क्षुधितस्य बुभुक्षितस्य तस्याङ्गागतसत्त्ववृत्तेर्मे मम सिंहस्य तृप्त्यै अलं पर्याप्ता । 'नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' इत्यनेन चतुर्थी ।

अन्वयः—परमेश्वरेण प्रदिष्टकाला उपस्थिता एषा शोणितपारणा चान्द्रमसी सुधेव क्षुधितस्य तस्य मे तृप्त्यै अलम् 'अस्तीति' शेषः ।

वाच्य०—परमेश्वरेण प्रदिष्टकालया उपस्थितया एतया शोणितपारणया सुरद्विषः चान्द्रमस्या सुधया इव मे तृप्त्यै अलं भूयते । ( भाव० )

चन्द्रिका—परमेश्वरेण परमात्मना, प्रदिष्टकाला निर्दिष्टसमया, देवेनैवेयं हृतास्ति इति भावः । उपस्थिता सन्निहिता, एषा पुरोवर्तिनी, शोणितपारणा रक्तात्मकं व्रतान्तभोजनम्, सुरद्विषः राहोः, चान्द्रिमसी चन्द्रसम्बन्धिनी, सुधेव पीयूषं यथा, क्षुधितस्य बुभुक्षितस्य, तस्य मे तादृशसिंहत्वं प्रापितस्य मम, तृप्त्यै सौहित्याय, सन्तोषायेत्यर्थः, अलं पर्याप्ता, अस्तीति शेषः ।

समासः—परमश्चासौ ईश्वरश्च परमेश्वरः ( कर्म० ) तेन परमेश्वरेण । प्रदिष्टः कालो यस्याः सा प्रदिष्टकाला ( बहु० ) । शोणितस्य पारणा शोणित-पारणा ( प० त० ) । सुरान् द्वेष्टीति सुरद्विट्, तस्य सुरद्विषः । चन्द्रमस इयं चान्द्रमसी ।

कोशः—'ईश्वरः स्वामिनि शिवे मन्मथेऽपीश्वराऽद्रिजा', अनेकार्थ० । 'रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ।' 'पीयूषममृतं सुधा' 'सौहित्यं तर्पणं तृप्तिः' 'बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः' । इत्यमराः ।

भावार्थः—चिराद् अलब्धभोजनस्य मे इदानीं परमेश्वरेण प्रेषिता इयं गौः व्रतान्तभोजनं भविष्यति । राहोः चन्द्रसम्बन्धिनी सुधा यथा दैवनिर्दिष्टा तृप्तिं जनयति तथैव ममापीयं नन्दिनी तृप्तिं जनयिष्यति इति भावः ।

हिन्दीश्लोकार्थः—परमेश्वर से निर्दिष्ट समय पर ( स्वयं ) आयी हुई यह गोरूप रुधिर भोजन, देवताओं के शत्रु राहु के लिए चन्द्रसम्बन्धि अमृत की तरह, मेरे लिए तृप्तिकर होगा ॥ ३९ ॥

स त्वं निवर्त्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥४०॥

सञ्जीविनी—स त्वमिति । एवमुपायशून्यस्त्वं लज्जां विहाय निवर्त्तस्व । भवांस्त्वं गुरोर्दर्शिता प्रकाशिता शिष्यस्य कर्त्तव्या भक्तिर्येन स तथोक्तोऽस्ति । ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह—शस्त्रेणेति । यद्रक्ष्यं धनं शस्त्रेणायुधेन । 'शस्त्रमायुधलोहयोः' इत्यमरः । अशक्या रक्षा यस्य तदशक्यरक्षम् । रक्षितुमशक्यमित्यर्थः । तद्रक्ष्यं नष्टमपि शस्त्रभृतां यशो न क्षिणोति न हिनस्ति । अशक्यार्थेष्वप्रतिविधानं न दोषायेति भावः ।

अन्वयः—सः त्वं लज्जां विहाय निवर्तस्व, भवान् गुरोः दर्शितशिष्यभक्तिः अस्ति । यद् रक्ष्यं शस्त्रेणाशक्यरक्षं तत् शस्त्रभृतां यशः न क्षिणोति ।

वाच्य०—तेन त्वया निवृत्यताम् ( भावे प्रयोगः अग्रेऽपि ), भवता दर्शितशिष्यभक्तिना 'भूयते' । येन रक्ष्येण शस्त्रेणाशक्यरक्षेण 'भूयते' तेन शस्त्रभृतां यशो न क्षीयते ( अन्तिमं वाक्यं कर्मवा० ) ।

चन्द्रिका—सः त्वम् गत्यन्तररहितः भवान्, लज्जां व्रीडां रक्ष्यवस्तु ह्रापयित्वा गमने जायमानामित्यर्थः, विहाय त्यक्त्वा, निवर्तस्व पराङ्मुखो भव, आश्रमं परावर्तस्वेत्यर्थः । कर्तव्यम् अकृत्वा कथं गच्छेयम् ? इति चेदाह—भवान् श्रीमान्, गुरोः वसिष्ठस्य, सम्बन्धसामान्यविवक्षायां षष्ठी, दर्शिता प्रकटिता, शिष्यस्य विधेयस्य अन्तेवासिनः, भक्तिः पूज्येष्वनुरागः, येन तादृशः, अस्ति वर्तते । अनेन परावर्तनेन 'अशक्तोऽयम्' इति अपकीर्तिः उदेष्यति इति शङ्कायामाह—यद् रक्ष्यं रक्षणीयं यद् वस्तु, शस्त्रेण आयुधेन, अशक्यरक्षं असाध्यत्राणम्, तत् शस्त्रारक्ष्यं वस्तु, शस्त्रभृताम् अस्त्रधारिणाम्, यशः कीर्तिम्, न क्षिणोति नैव ह्रासयति । असाध्ये कार्येऽप्रवृत्तिः निन्दनीया न भवतीति भावः ।

समासः—शिष्यस्य भक्तिः शिष्यभक्तिः ( ष० त० ) दर्शिता शिष्यभक्तिः येन सः दर्शितशिष्यभक्तिः । न शक्या अशक्या ( नञ्तत्पु० ), अशक्या रक्षा यस्य तद् अशक्यरक्षम् । रक्षितुं योग्यं रक्ष्यम् । शस्त्रं बिभ्रतीति शस्त्रभृतः, तेषां शस्त्रभृताम् ।

कोशः—'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' 'स्यान्निषेकादिकृद् गुरुः ।' 'छात्रान्तेवासिनो शिष्ये' इति चामराः । 'भक्तिः सेवागौणवृत्त्योर्भङ्ग्या श्रद्धाविभागयोः' इत्यनेकार्थसंग्रहः ।

भावार्थः—हे दिलीप ! मद्विषये कुण्ठितशस्त्रप्रभावो भवान् उपायान्तराभावात् त्यक्तलज्जासङ्कोच आश्रमं प्रति याहि । गुरौ त्वया भक्तिः गोरक्षणे कृतप्रयत्नत्वात् प्रकटीकृतैव । रक्षणार्हमपि वस्तु शस्त्रसाध्यं न चेत् शस्त्रधारिणः वीरताकीर्ति न दूषयति । प्रकृते इयं गौः मत्सकाशात् त्वया शस्त्रबलात् रक्षितुं नैव शक्या । अशक्यकार्ये अप्रवृत्तिः नैव दोषायेति भावः ।

हिन्दीश्लोकार्थः—उपायान्तर न होने से तुम लज्जा-संकोच छोड़कर लौट जाओ। तुमने गुरुजी पर भक्ति प्रकाशित कर दी है। जो रक्षणीय पदार्थ शस्त्र से रक्षा करने योग्य नहीं होता ( उसका विनाश होने पर भी ) वह शस्त्रधारियों की कीर्ति को नष्ट ( कम ) नहीं कर सकता ॥ ४० ॥

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥४१॥

सञ्जीविनी—इतीति। पुरुषाणामधिराजो नृप इति प्रगल्भं मृगाधिराजस्य वचो निशम्य श्रुत्वा गिरिशस्येश्वरस्य प्रभावात्प्रत्याहतास्त्रः कुण्ठितास्त्रः सन्नात्मनि विषये, अवज्ञामपमानं शिथिलीचकार। तत्याजेत्यर्थः। अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः। समानेषु हि क्षत्रियाणामभिमानो न सर्वेश्वरं प्रतीति भावः।

अन्वयः—पुरुषाधिराजः इति प्रगल्भं मृगाधिराजस्य वचः निशम्य गिरिशप्रभावात् प्रत्याहतास्त्रः 'सन्' आत्मनि अवज्ञां शिथिलीचकार।

वाच्य०—पुरुषाधिराजेन प्रत्याहतास्त्रेण 'सता' आत्मन्यवज्ञां शिथिलीचक्रे। ( कर्म० )

चन्द्रिका—पुरुषाधिराजः नराधीश्वरः, इति उक्तरीत्या, प्रगल्भं प्रौढम्, मृगाधिराजस्य सिंहस्य, वचः भाषणं, निशम्य श्रुत्वा, गिरिशप्रभावात् शिवमाहात्म्यात्, प्रत्याहतास्त्रः प्रतिबद्धशस्त्रः, कुण्ठितशस्त्र इति यावत्, सन् भवन्, आत्मनि स्वस्मिन्, अवज्ञाम् अवमानम्, हीनत्वाद्बुद्धिमिति यावत्, शिथिलीचकार लघूचकार। परमेश्वरप्रतापात् प्रतिकर्तुमसमर्थः न तु कस्यचित् सिंहस्य इति विदित्वा आत्मनि हीनभावमत्यजदिति भावः।

समासः—अधिको राजा अधिराजः, पुरुषाणाम् अधिराजः पुरुषाधिराजः। मृगाणाम् अधिराजः मृगाधिराजः, तस्य मृगाधिराजस्य ( ष० त० )। प्रत्याहृतम् अस्त्रं यस्य सः ( बहु० ) प्रत्याहृतास्त्रः। गिरौ ( कैलासे ) शेते इति गिरिशः, गिरिशस्य प्रभावः गिरिशप्रभावः (ष० त०), तस्मात् गिरिशप्रभावात्।

कोशः—'पुरुषाः पूरुषा नरः' 'प्रगल्भः प्रतिभान्विते' 'भाषितं वचनं वचः' 'गिरीशो गिरिशो मृडः' 'अस्त्रमायुधलोहयोः' 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।' 'रीढावमाननावज्ञावहेलनमसूर्क्षणम्।' इति यथायथममराः।

भावार्थः—राजा दिलीपः मृगेन्द्रस्य वचनं श्रुत्वा महादेवस्य प्रभावादेव मम बाहुस्तम्भः, न पुनरेतस्य सिंहस्य, इति ज्ञात्वा 'स्वस्य अपमानो जातः' इति भावं परितत्याजेति भावः।

हिन्दीश्लोकार्थः—राजा दिलीप ने इस प्रकार ढीठ सिंह के वक्तव्य को सुनकर महादेवजीके प्रभाव से अपने भुजास्तम्भन हुआ जानकर अपने विषय में अपमान-भावना को ढीला कर दिया अर्थात् त्याग दिया ॥४१॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥४२॥

सञ्जीविनी—प्रतीति । स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिंस्तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नो विफलप्रयासः । अत एव वज्रं कुलिशं मुमुक्षन्मोक्तुमिच्छन् । अम्बकं लोचनम् । 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः । त्रीण्यम्बकानि यस्य स त्र्यम्बको हरः, तस्य वीक्षणेन जडीकृतः निष्पन्दीकृतः । वज्रं पाणौ यस्य स वज्रपाणिरिन्द्रः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः इति वक्तव्यम्' इति पाणेः सप्तम्यन्तस्योत्तरनिपातः । स इव स्थितो नृप एनं सिंहं प्रत्यब्रवीच्च । 'बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः ।' इति महाभारते ।

अन्वयः—तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नः 'तत एव' वज्रं मुमुक्षन् त्र्यम्बकवीक्षणेन जडीकृतः वज्रपाणिः इव 'स्थितो राजा' एनं प्रत्यब्रवीच्च ।

वाच्य०—वितथप्रयत्नेन वज्रं मुमुक्षता जडीकृतेन वज्रपाणिनेव 'स्थितेन नृपेण' एषः प्रत्योच्यत । (कर्म० )

चन्द्रिका—स एव पूर्वः सर्वप्रथमः भङ्गः पराजयः यस्य तस्मिन्, तत्पूर्वभङ्गे इषुप्रयोगे बाणमोक्षणे. वितथप्रयत्नः वृथाश्रमः, तत एव वज्रं कुलिशम्, मुमुक्षन् प्रयोक्तुमिच्छन्, त्र्यम्बकस्य त्रिलोचनस्य, वीक्षणेन विलोकनेन, जडीकृतः स्तब्धीकृतः वज्रपाणिरिव इन्द्रो यथा, 'स्थितो वर्तमानो राजा' एनं मृगेन्द्रम्, प्रत्यब्रवीच्च प्रत्यवदच्च ।

समासः—सः पूर्वः भङ्गो यस्य सः तत्पूर्वभङ्गः, तस्मिन् (बहु०) तत्पूर्वभङ्गे । वितथः प्रयत्नो यस्य (बहु०) सः वितथप्रयत्नः । इषोः प्रयोगः (प०त०) इषुप्रयोगः, तस्मिन् इषुप्रयोगे । त्रीणि अम्बकानि (लोचनानि) यस्य सः ( बहु० ) त्र्यम्बकः, त्र्यम्बकस्य वीक्षणम् त्र्यम्बकवीक्षणम्, तेन त्र्यम्बकवीक्षणेन । न जडः अजडः, अजडो जडः सम्पद्यमानः कृतः जडीकृतः । मोक्तुमिच्छन् मुमुक्षन् । वज्रं पाणौ यस्य सः वज्रपाणिः ।

कोशः—'वितथं त्वनृतं वचः' 'पत्री रोप इषुर्द्वयोः' 'वज्रोऽस्त्री हीरके पवौ' त्र्यम्बकस्त्रिपुरान्तकः' इति चामराः ।

भावार्थः—बाणप्रयोगे सर्वप्रथमोऽयं पराभव आसीद् दिलीपस्य । पूर्वमीदृशः पराजयः शक्रस्यापि, वज्रेण प्रहर्तुं कृतप्रयत्नस्य तस्य बाहुस्तम्भं कृतवान् हरः । अयमपि साम्प्रतं तथैव जातः । व्यर्थपुरुषार्थो दिलीपः सिंहस्य समयोचित प्रत्युत्तरं ददौ इति भावः ।

हिन्दीश्लोकार्थः—सर्वप्रथम बाणप्रयोग में विफलता मिली जिसको, ऐसे विफल-प्रयास वाले अतएव, वज्रप्रहार करना चाहने वाले किन्तु शंकर के देखने-

मात्र से स्तब्ध किये गये इन्द्र के समान स्थित राजा दिलीप सिंह के उत्तर में बोले ॥४२॥

संरुद्धचेष्टस्य मृगेन्द्र ! कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥४३॥

सञ्जीविनी — संरुद्धचेष्टस्येति । मृगेन्द्र ! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयं, यद्वचः 'स त्वं मदीयेन' (२।४५) इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिङ्करत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह—अन्तरिति । हि यतो भवान्प्राणभृतामन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति । 'विदो लटो वा' इति णलादेशः । अतोऽहमभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म सम्बद्ध्यते । अन्ये त्वीदृग्वचनमाकर्ण्यासम्भावितार्थमेतदित्युपहसन्ति, अतस्तु मौनमेव भूषणम् । त्वं तु वाङ्मनसयोरेकविध एवायमिति जानाति । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ।

अन्वय —हे मृगेन्द्र ! संरुद्धचेष्टस्य तद् वचः कामं हास्यम् 'भवति' यद् वचः अहं विवक्षुः 'अस्मि' । हि भवान् प्राणभृताम् अन्तर्गतं सर्वं भावं वेद, अतः अभिधास्ये ।

वाच्य०—तेन वचसा हास्येन 'भूयेत', मया विवक्षुणा 'भूयते अन्तर्गतः सर्वो भावो भवता वेद्यते (कर्म०) । अतो मया अभिधास्यते । ( कर्म० )

चन्द्रिका—हे मृगेन्द्र ! हे सिंह ! संरुद्धाः प्रतिबद्धाः चेष्टाः व्यापाराः, यस्य तादृशस्य मम तद् विवक्षित वचः वचनं, कामं यथेच्छम्, हास्यम् उपहसनीयम्, भवति इति शेषः । यद्-यद् वचनम्, अहं विवक्षुः वक्तुम् इच्छुः, अस्मीति शेषः । हि यस्मात् कारणात्, भवान् श्रीमान्, प्राणभृताम् चेतनानाम्, अन्तर्गतं हृदयगतम्, सर्वं निखिलं, भावम् अभिप्रायम्, वेद जानाति । अतः तस्मात्. अभिधास्ये कथयिष्यामि ।

समासः—मृगाणाम् इन्द्रस्तत्संबुद्धिः मृगेन्द्र । संरुद्धाः चेष्टाः यस्य सः संरुद्धचेष्टः ( बहु० ), तस्य संरुद्धचेष्टस्य । हसितुं योग्यं हास्यम् । वक्तुम् इच्छुः विवक्षुः । प्राणान् बिभर्तीति प्राणभृतः, तेषां प्राणभृताम् ।

कोशः—'सिंहो मृगेन्द्रः पञ्चास्यः' 'भाषितं वचनं वचः' 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्' 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इति चामराः ।

भावार्थः—हे सिंह ! अहं साम्प्रतं करचरणादिकं स्पन्दयितुमपि न पारयामि, अतोऽहं किमपि वदामि चेत् त्वं 'अशक्तोऽयं वदति' इति यथेच्छ हसेः । यतः त्वं प्राणिना हृदयगतं वाण्या अप्रकाशितमपि जानासि एव । तस्मादहं वक्तुमिष्टं स्वयं कथयिष्यामि ।

हिन्दीश्लोकार्थः—हे सिंह ! रुकी हुई है चेष्टा जिसकी, ऐसे मुझ दिलीप का वह वचन तुम्हें उपहास करने के योग्य है, जिसे मैं कहना चाहता हूँ । यतः तुम

सभी जीवों के हृद्गत भाव को ( न कहने पर भी ) जानते ही हो, अतः मैं कहूँगा ॥ ४३ ॥

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥४४॥

सञ्जीविनी—मान्य इति । प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां जङ्गमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरो मे मम मान्यः पूज्यः । अलङ्घ्यशासन इत्यर्थः । शासनं च 'सिंहत्वमङ्कागतसत्त्ववृत्ति' ( २।३८ ) इत्युक्तरूपम् । तर्हि विसृज्य गम्यताम् । नेत्याह—गुरोरपीति । पुरस्तादग्रे नश्यदिदमाहिताग्नेर्गुरोर्धनमपि गोरूपमनुपेक्षणीयम् । आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधकत्वं सूचयति ।

अन्वयः—स्थावरजङ्गमाना सर्गस्थितिप्रत्यवहारहेतुः सः मे मान्यः 'अस्ति' पुरस्ताद् नश्यद् इदम् आहिताग्नेः धनमपि अनुपेक्षणीयम् 'अस्ति' इति शेषः ।

वाच्य०—सर्गस्थितिप्रत्यवहारहेतुना तेन मे मान्येन भूयते । पुरस्ताद् नश्यता अनेन धनेनापि अनुपेक्षणीयेन भूयते । ( भाव० ) ।

चन्द्रिका—स्थावराणाम् अचराणाम्, जङ्गमानां चराणाम्, पादपपर्वतादीनां मानवादीनां चेति भावः । सर्गः सृष्टिः, स्थितिः पालनम्, प्रत्यवहारः संहारः, तत्र हेतुः कारणम् । सः ईश्वरः, मे म, मान्यः, पूज्यः, अस्तीति शेषः । पुरस्तात् सम्मुखे, विनश्यद् विपद्यमानम्, इदं गोरूपम्, आहिताग्नेः अग्निहोत्रिणः, गुरोः वसिष्ठस्य, धनमपि सम्पदपि, अनुपेक्षणीयम् नावहेलनीयम् । न उपेक्ष्यमिति भावः ।

समासः—स्थावराश्च जङ्गमाश्च ( द्वन्द्व० ) स्थावरजङ्गमाः, तेषां स्थावरजङ्गमानाम् । सर्गश्च स्थितिश्च प्रत्यवहारश्च सर्गस्थितिप्रत्यवहाराः (द्वन्द्व०), तेषां हेतुः ( ष० त० ) सर्गस्थितिप्रत्यवहारहेतुः । आहितः अग्निः येन सः आहिताग्निः, तस्य आहिताग्नेः । उपेक्षितुं योग्यम् उपेक्षणीयम् ।

कोशः—'स्थावरो जङ्गमेतरः' 'चरिष्णु जङ्गमचरम्' 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' 'हेतुर्ना कारणं' 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इति चामराः ।

भावार्थः—चराचरात्मकजगतः सृष्टि-स्थिति-संहारकर्ता भगवान् भवः मम पूज्यः । अतः भवदुक्तं शिवानुचरोक्तत्वात् समादरणीयमेव मे । एवमेव अग्निहोत्रिणः वसिष्ठस्य होमसाधनभूतं अग्रे नाशं गच्छत् गोरूपं धनमपि परित्रातव्यमेव मे ।

हिन्दीश्लोकार्थः—चराचरात्मक जगत् की सृष्टि, स्थिति तथा संहार में कारणभूत भगवान् शिव मेरे लिए आदरणीय हैं । और सम्मुख में ही नष्ट होनेवाला अग्निहोत्री गुरुजी का यह गोरूप धन भी उपेक्षा करने योग्य नहीं है ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥४५॥

सञ्जीविनी—स इति । सोऽङ्कागतसत्त्ववृत्तिस्त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्तयितुं सम्पादयितुं प्रसीद । दिनावसाने उत्सुको 'माता समागमिष्यती'-त्युत्कण्ठितो बालवत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् ।

अन्वयः—सः त्वं मदीयेन देहेन शरीरवृत्तिं निर्वर्तयितुं प्रसीद । दिनावसानोत्सुकबालवत्सा महर्षेः इयं धेनुः विसृज्यताम् ।

वाच्य०—तेन त्वया मदीयेन देहेन शरीरवृत्तिं निर्वर्तयितुं प्रसद्यताम् ( भाववा० ) । दिनावसानोत्सुकबालवत्सां महर्षेः इमां धेनुं विसृज ( कर्तृवाच्यम् ) ।

चन्द्रिका—सः सन्निकटागतप्राणिवृत्तिः, त्वं भवान्, मदीयेन मामकीनेन, देहेन शरीरेण, शरीरवृत्तिं देहव्यापारं, भोजनमिति यावत्, निर्वर्तयितुं सम्पादयितुं, प्रसीद सकृपो भव । दिनावसाने सायंकाले, उत्सुकः उत्कण्ठितः, बालवत्सः शिशुतर्णकः, यस्याः सा दिनावसानोत्सुकबालवत्सा । ऋषेः वशिष्ठस्य, इयं प्रत्यक्षस्थिता, धेनुः नन्दिनी गौः, विसृज्यतां मुच्यताम् ।

समासः—ममायं मदीयः, तेन मदीयेन । शरीरस्य वृत्तिः शरीरवृत्तिः, तां शरीरवृत्तिम् । दिनस्य अवसानं दिनावसानम् ( ष०त० ), दिनावसाने उत्सुका दिनावसानोत्सुका, बालश्चासौ वत्सश्च बालवत्सः, दिनावसानोत्सुको बालवत्सो यस्याः सा ( बहु० ) दिनावसानोत्सुकबालवत्सा ।

कोशः—'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।' 'वृत्तिर्वर्तनजीवने' 'धेनुः स्यान्नवसूतिका' 'वत्सौ तर्णकवर्षौ द्वौ' इति चामराः ।

भावार्थः—शिवादेशपालनमपि स्यात्, गुरोः धनमपि रक्षितं स्यात्, ईदृशं प्रस्तावमुपस्थापयामि, कृपया स्वीकुरु । अङ्कागतप्राणिभोजनस्त्वं मम शरीरेण पारणां कुरु । सायङ्काले अस्याः बुभुक्षितः समुत्सुकश्च सद्यो जातवत्स एनां प्रतीक्षते । मातृदुग्धमेव तस्य प्रधानं आहारः । अत इमां मुञ्च, एवं कर्तुं प्रसन्नो भव ।

हिन्दीश्लोकार्थः—निकट आये हुए प्राणियों पर ही अपना जीवननिर्वाह चलानेवाले तुम मेरे शरीर से अपनी पारणा ( व्रतान्तभोजन ) चला लो, कृपा करो । और सन्ध्या को उत्कण्ठित छोटे बछड़े वाली महर्षि वसिष्ठ की यह धेनु छोड़ दिया जाय ॥४५॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किञ्चिद्विहस्यार्थपतिं बभाषे ॥४६॥

सञ्जीविनी—अथेति । अथ भूतेश्वरस्य पार्श्ववर्त्यनुचरः स सिंहो गिरेर्गह्वराणां गुहानाम् । 'देवखातबिले गुहा । गह्वरम्' इत्यमरः । अन्धकारं ध्वान्तं दंष्ट्रामयूखैः, शकलानि खण्डानि कुर्वन् । निरस्यन्नित्यर्थः । किञ्चिद्विहस्यार्थपतिं नृपं भूयो बभाषे । हास्यकारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' इति वक्ष्यमाणं द्रष्टव्यम् ।

अन्वयः—अथ भूतेश्वरपार्श्ववर्ती सः गिरिगह्वराणाम् अन्धकारं दंष्ट्रामयूखैः शकलानि कुर्वन् किञ्चिद् विहस्य अर्थपतिं भूयः बभाषे।

वाच्य०—भूतेश्वरपार्श्ववर्तिना तेन अन्धकारं शकलानि कुर्वता विहस्य अर्थपतिः भूयो बभाषे। ( कर्म० )

चन्द्रिका—अथ दिलीपनिवेदनानन्तरं, भूतेश्वरस्य भूतपतेः शिवस्य, पार्श्ववर्ती अनुचरः, सः सिंहः, गिरेः पर्वतस्य, गह्वराणां गुहानाम्, अन्धकारं ध्वान्तम्, दंष्ट्राणां स्थूलदन्तानाम्, मयूखैः कान्तिभिः, शकलानि खण्डानि, कुर्वन् वितन्वन्, अपनोदयन्नित्यर्थः, किञ्चिद् ईषद्, सव्यंग्यमिति यावत्, विहस्य हासं कृत्वा, अर्थपतिं धनस्वामिनम्, भूयः पुनः, बभाषे उवाच।

समासः—भूतानामीश्वरः भूतेश्वरः, भूतेश्वरस्य पार्श्ववर्ती (पार्श्वे वर्तते इति पार्श्ववर्ती) भूतेश्वरपार्श्ववर्ती (ष०त०)। गिरेः गह्वराणि गिरिगह्वराणि (ष०त०) तेषां गिरिगह्वराणाम्। दंष्ट्राणां मयूखाः दंष्ट्रमयूखाः, तैः (ष०त०) दंष्ट्रामयूखैः। अर्थस्य पतिः (ष०त०) अर्थपतिः।

कोशः—'देवखातविले गुहा। गह्वरम्', 'अन्धकारोऽस्त्रियां ध्वान्तम्' 'भित्तं शकलखण्डे वा' 'किञ्चिदीषन्मनागर्थे' इति चामरः।

भावार्थः—राज्ञः स्वशरीरार्पणप्रस्तावं श्रुत्वा सिंहः साभिप्रायं हसन् पुना राजानं वक्तुमुपक्रान्तवान्। भाषणसमये तस्य दंष्ट्राणां शुभ्रा कान्तिः गुहास्थं ध्वान्तं दूरीकुर्वन्ती आसीत्।

हिन्दीश्लोकार्थः—दिलीप के कहने के बाद शङ्कर का अनुचर वह सिंह पर्वत की गुफाओं के अन्धकार को दाँतों की कान्ति से टुकड़े करता हुआ मुसकरा कर पुनः दिलीप से कहने लगा ॥४६॥

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥४७॥

सञ्जीविनी—एकातपत्रमिति। एकातपत्रमेकच्छत्रं जगतः प्रभुत्वं स्वामित्वम्। नवं वयो यौवनम्। इदं कान्तं रम्यं वपुश्च। इत्येवं बहु अल्पस्य हेतोरल्पेन कारणेन, अल्पफलायेत्यर्थः। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। हातुं त्यक्तुमिच्छंस्त्वं विचारे कार्याकार्यविमर्शे मूढो मूर्खो मे मम प्रतिभासि।

अन्वयः—एकातपत्रं, जगतः प्रभुत्वम्, नवं वयः, इदं कान्तं वपुश्च, 'इत्येवं' बहु अल्पस्य हेतोः हातुम् इच्छन् त्वं विचारमूढः मे प्रतिभासि।

वाच्य०—बहु हातुम् इच्छता त्वया विचारमूढेन मे प्रतिभासते, ( भावे-प्रयोगोऽयमकर्मकत्वात् )।

चन्द्रिका—एकातपत्रम् एकच्छत्रम्, अखण्डभूमण्डलाधिपतिनैव इदं प्राप्यते, नान्येन प्रदेशराजेन। जगतः भुवनस्य, प्रभुत्वं स्वामित्वम्। नवं नूतनम्, वयः अवस्था, कान्तं मनोरमम्, इदं दृश्यमानम्, वपुश्च शरीरञ्च, इत्येवं बहु अनल्पम्,

अल्पस्य हेतोः क्षुद्रेण कारणेन, हेतुशब्दप्रयोगात् 'षष्ठी हेतुप्रयोगे' इति षष्ठी। हातुं त्यक्तुम्, इच्छन् वाञ्छन्, त्वं दिलीपः विचारे कार्याकार्यविवेके, मूढः वालिशः मे मम, प्रतिभासि भाससे ।।

समासः—एकञ्च तत् आतपत्रञ्च एकातपत्रम् (कर्म०)। प्रभोर्भावः प्रभुत्वम्। विचारे मूढः विचारमूढः ।

कोशः—'एके मुख्यान्यकेवलाः' 'छत्रं त्वातपत्रम्' 'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्' 'प्रभुः परिवृढोऽधिपः' 'नवीनो नूतनो नवः' 'खगबाल्यादि-नोर्वयः' 'कान्तं मनोरमं रुच्यम्' 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः।' 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इति यथाक्रममरः।

भावार्थः—एकच्छत्र जगदीश्वरत्व-नूतनावस्था-सुन्दरशरीराणीति अनल्पानि अल्पस्य गोरूपवस्तुनः कृते परित्यक्तुं सन्नद्धः त्वं मया विचारशून्यो दृश्यसे।

हिन्दीश्लोकार्थः—एकच्छत्र, संसार का स्वामित्व, नूतन तारुण्य, यह सुन्दर शरीर इन सब चीजों को क्षुद्र नन्दिनी गौ के लिए त्यागने की इच्छा करते हुए तुम मुझे विवेकशून्य जान पड़ते हो ॥४७॥

भूतानुकम्पा तव चेदियं गौरेका भवेत् स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ ! पितेव पासि ॥४८॥

सञ्जीविनी—भूतानुकम्पेति। तव भूतेष्वनुकम्पा कृपा चेत्। 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः। कृपैव वर्तते चेदित्यर्थः। र्तहि त्वदन्ते तव नाशे सतीयमेका गौः। स्वस्ति क्षेममस्या अस्तीति स्वस्तिमती भवेत् जीवेदित्यर्थः। 'स्वस्त्याशीः क्षेमपुण्यादौ' इत्यमरः। हे प्रजानाथ ! जीवन् पुनः पितेव प्रजा उपप्लवेभ्यः, शश्वत्सदा। 'पुनः सदार्थयोः शश्वत्' इत्यमरः। पासि रक्षसि। स्वप्राणव्ययेनैकधेनुरक्षणाद्वरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः।

अन्वयः—तव भूतानुकम्पा चेत् त्वदन्ते 'सति' इयम् एका गौः स्वस्तिमती भवेत्। हे प्रजानाथ ! जीवन् पुनः 'त्वं' पिता इव प्रजाः उपप्लवेभ्यः शश्वत् पासि।

वाच्य०—तव भूतानुकम्पया 'भूयते' चेत् अनया एकया गवा स्वस्तिमत्या 'भूयते'। जीवता पुनः 'त्वया' पित्रेव प्रजाः शश्वत् पायन्ते। ( गतद्वयं भाव० अन्तिमं कर्म० )।

चन्द्रिका—तव भवतः, भूतेषु प्राणिषु, अनुकम्पया दया, चेत् यदि, तव अन्ते त्वन्नाशे, 'सति भवति' इयं पुरो दृश्यमाना, एका केवला, गौः धेनुः, स्वस्तिमती क्षेमवती, भवेत् स्यात्। हे प्रजानाथ ! हे जनस्वामिन् ! जीवन् पुनः प्राणान् धारयंस्तु, पुनरिति वैलक्षण्ये, पितेव जनको यथा, प्रजाः जनान्, उपप्लवेभ्यः सङ्कटेभ्यः, शश्वत् सदा, पासि त्रायसे। जीवनमरणयोः प्रयोजनगुरुलाघवे

विमृश्यमाने मरणादेकगोरक्षणं जीवनाच्च निरन्तरप्रजारक्षणमिति 'स्वात्मानं सततं रक्षेद्' इत्याकूतम् ।

समासः—भूतेषु अनुकम्पा ( स० त० ) भूतानुकम्पा । तव अन्तः त्वदन्तः, तस्मिन् त्वदन्ते । प्रजानां नाथ इति प्रजानाथः, तत्संबुद्धौ प्रजानाथ ! स्वस्त्यस्या अस्तीति स्वस्तिमती ।

कोशः—'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ।' 'अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ।' 'कृपा दयाऽनुकम्पा स्यादनुक्रोश' 'स्वस्त्याशीः क्षेमपुण्यादौ' इत्यमराः । 'उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि' इति मेदिनी । 'एके मुख्यान्यकेवलाः' इत्यमरः ।

भावार्थः—प्राणिदयया ममैवं सङ्कल्प इति चेत् मृत्वा एकगोरक्षणापेक्षया जीवित्वा तु प्रजानां पितृवत् सङ्कटेभ्यः सर्वदा रक्षणं महती प्राणिदया वर्तते इति भावः ।

हिन्दीश्लोकार्थः—राजन् ! यदि तुम प्राणियों पर दया के कारण ऐसा करना चाहते हो तो तुम्हारे मर जाने पर केवल एक गाय का क्षेम होगा । हे प्रजेश्वर दिलीप ! तुम जीते हुए पिता के समान प्रजाओं की कष्टों से सतत रक्षा कर सकते हो ॥ ४८ ॥

अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोघ्नीः ॥४९॥

सञ्जीविनी—अथेति । अथ पक्षान्तरे, अथवा । एकैव धेनुर्यस्य तस्मात् । अयं कोपकारणोपन्यास इति ज्ञेयम्, अत एवापराधे गवोपेक्षालक्षणे सति चण्डादतिकोपनात्, 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । अत एव कृशानुः प्रतिमोपमा यस्य तस्मादग्निकल्पाद् गुरोर्बिभेषि इति काकुः । 'भीत्रार्थानां भयहेतुः' इत्यपादानात्पञ्चमी । अल्पवित्तस्य धनहानिरतिदुःसहेति भावः । अस्य गुरोर्मन्युः क्रोधः 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । घटा इवोधांसि यासां ता घटोघ्नीः । 'ऊधसोऽनङ्' इत्यनङादेशः, 'बहुव्रीहेरूधसो ङीष्' इति ङीष् । कोटिशो गाः स्पर्शयता प्रतिपादयता । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । भवता विनेतुमपनेतुं शक्यः ।

अन्वयः—अथ एकधेनोः अपराधचण्डात् कृशानुप्रतिमात् गुरोः बिभेषि ? अस्य मन्युः घटोघ्नीः कोटिशः गाः स्पर्शयता भवता विनेतुं शक्यः ।

वाच्य०—अथ त्वया कृशानुप्रतिमाद् गुरोः भीयते, अस्य मन्युं कोटिशः गाः स्पर्शयन् भवान् विनेतुं शक्नुयात् । ( कर्तृ० )

चन्द्रिका—अथ यद्वा, एकधेनोः एकमात्रगोमतः, अपराधचण्डात् धेनूपेक्षणाकृत्ये अत्यन्तकोपनात्, कृशानुप्रतिमात् अनलसदृशाद्, गुरोः वसिष्ठाद् बिभेषि त्रस्यसि ? अस्य गुरोः, मन्युः क्रोधः, घटोघ्नीः महापीनाः, भूरिदुग्धा इति यावत्, कोटिशः परस्सहस्राः, गाः पयस्विनीः, स्पर्शयता वितरता, भवता श्रीमता, विनेतुम् अपा-

प्रसादयितुमर्हसीत्यर्थः ।

समासः—एकैव धेनुः यस्य सः एकधेनुः ( बहु० ), तस्माद् एकधेनोः । अपराधे चण्डः अपराधचण्डः, तस्मात् अपराधचण्डाद् । कृशानुः प्रतिमा यस्य सः कृशानुप्रतिमः, तस्मात् कृशानुप्रतिमात् । स्पर्शयतीति स्पर्शयन्, तेन स्पर्शयता । घटा इव ऊधांसि यासां ताः घटोघ्न्यः, ताः घटोघ्नीः ।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।' 'एकाकी त्वेक एककः' 'आगोऽपराधो मन्तुश्च' 'चण्डस्त्वत्यन्तकोपनः' 'कृशानुः पावकोऽनलः' 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।' 'मन्युर्दैन्ये क्रतौ क्रुधि' 'ऊधस्तु क्लीबमापीनम्' 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इति यथायथममराः ।

भावार्थः—गुरोर्भीत एवं प्रवृत्तः चेत् ? एकैव इयं धेनुः गुरुसकाशे, अतस्त्वां घातयित्वा गवघ्नेत् दहनकल्पः स गुरुः मां समूलं विनाशयेदिति सम्भावयसे यदि, अनल्पक्षीराः कोटिसङ्ख्यया गाः वितीर्य तत्क्रोधापनयनं कर्तुं शक्नोषि त्वमनायासेन ।

हिन्दीश्लोकार्थः—अथवा, एक ही है धेनु जिसकी, और अपराध होने पर बहुत ही क्रुद्ध, अग्नि के सदृश अपने गुरु वसिष्ठ से तुम डरते हो तो उनके रोषको घड़े के समान बड़े स्तनोंवाली करोड़ों गायों को देते हुए दूर कर सकते हो ॥४९॥

तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥५०॥

सञ्जीविनी—तद्रक्षेति । तत्तस्मात्कल्याणपरम्पराणां भोक्तारम् । कर्मणि षष्ठी । ऊर्जो बलमस्यास्तीत्यूर्जस्वलम् । 'ज्योत्स्नातमिस्रे'त्यादिना वलच्प्रत्ययान्तो निपातः । आत्मदेहं रक्ष । ननु गामुपेक्ष्यात्मदेहरक्षणे स्वर्गहानिः स्यात् । नेत्याह— महीतलेति; ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रेण भूतलसम्बन्धमात्रेण भिन्नमैन्द्रमिन्द्रसम्बन्धि पदं स्थानमाहुः स्वर्गान्न भिद्यत इत्यर्थः ।

अन्वयः— तत् कल्याणपरम्पराणां भोक्तारम् ऊर्जस्वलम् आत्मदेहं रक्ष, हि ऋद्धं राज्यं महीतलस्पर्शनमात्रभिन्नम् ऐन्द्रं पदम् आहुः ।

वाच्य०—कल्याणपरम्पराणां भोक्ता ऊर्जस्वल आत्मदेहस्त्वया रक्ष्यताम् । महीतलस्पर्शनमात्रभिन्नं राज्यम् ऐन्द्रं पदम् उच्यते ( कर्म० ) ।

चन्द्रिका—कल्याणानां मङ्गलानाम्, परम्पराणां श्रेणीनाम्, एकस्मात् परं परस्मादन्यदित्यनुगतरूपेण सुखानामेवेति यावत् । भोक्तारम् अनुभवितारम् ऊर्जस्वलम् प्रबलम्, आत्मदेहं निजशरीरम्, रक्ष पाहि । हि यस्मात्, ऋद्धं सुसमृद्धम्, राज्यं राजभावः राजकर्म वा । महीतलस्य भूतलस्य, स्पर्शनमात्रेण केवलस्पर्शेन, भिन्नम् अन्यत्, ऐन्द्रम् इन्द्रसम्बन्धि, पदं स्थानं स्वर्गम् आहुः कथयन्ति, मनीषिण इति शेषः ।

समासः—कल्याणानां परम्पराः कल्याणपरम्पराः, तासां कल्याणपरम्पराणाम् ( ष०त० )। ऊर्जोऽस्यास्तीति ऊर्जस्वलः, तम् ऊर्जस्वलम् ( मत्वर्थीयव० )। आत्मनो देहः आत्मदेहः, तम् आत्मदे[illegible]। मह्याः तलं महीतलम्, महीतलस्य स्पर्शनं महीतलस्पर्शनम्, केवलं महीतलस्पर्शनं महीतलस्पर्शनमात्रम्, महीतलस्पर्शनमात्रेण भिन्नं महीतलस्पर्शनमात्रभिन्नम्, तत् महीतलस्पर्शनमात्रभिन्नम्। इन्द्रस्येदम् ऐन्द्रम्; तत् ऐन्द्रम्।

कोशः—'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्।' ऊर्जस्वलः स्यादूर्जस्वी यः ऊर्जातिशयान्वितः।' इत्यमरः। 'ऋद्धं सम्पन्नधान्ये च सुसमृद्धौ च वाच्यवत्।' इति मेदिनी। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः।

भावार्थः—तस्मात् सन्ततसुखानाम् अनुभवितृ निजशरीरं पालय, क्षुद्रवस्तुविनिमये मा त्यज। सम्पन्नं राज्यं भौमं स्वर्गं कथयन्ति। तव प्राणिदयादिकं कृत्वा स्वर्गः साध्यो नास्ति, स्वर्गः स्वयं तव सिद्धः, स केवलं भौ[illegible]क इत्येव।

हिन्दीश्लोकार्थः—इस कारण राजन् दिलीप, निरन्तर सुख भोगनेवाले और अत्यन्त बलशाली अपने शरीर की रक्षा करो। क्योंकि मनीषी लोग कहते हैं कि सम्पन्न राज्य केवल भूमिस्पर्श से भिन्न स्वर्ग ही है। अर्थात् भूमिगत स्वर्ग है॥५०॥

**एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन।**
**शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव॥५१॥**

सञ्जीविनी—एतावदिति। मृगेन्द्र एतावदुक्त्वा विरते सति गुहागतेनास्य सिंहस्य प्रतिस्वनेन शिलोच्चयः शैलोऽपि प्रीत्या तमेवार्थं क्षितिपालमुच्चैरभाषतेव। इत्युत्प्रेक्षा। भाषिरयं ब्रुविसमानार्थकत्वाद् द्विकर्मकः, ब्रुविस्तु द्विकर्मकेषु पठितः। तदुक्तम्—'दुह्याचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना॥' इति।

अन्वयः—मृगेन्द्र एतावत् उक्त्वा विरते 'सति' गुहागतेन अस्य प्रतिस्वनेन शिलोच्चयोऽपि प्रीत्या तमेव अर्थम् क्षितिपालम् उच्चैः अभाषत इव।

वाच्य०—शिलोच्चयेनापि प्रीत्या स एवार्थः क्षितिपालम् उच्चैः अभाष्यतेव ( कर्म० )।

चन्द्रिका—मृगेन्द्रे सिंहे, एतावत् 'एकातपत्रम्' इत्यादिना 'पदमैन्द्रमाहुः' इत्यन्तं यावत्, उक्त्वा कथयित्वा, विरते सति विश्रान्ते सति, ( भवन्०स०ए० ) गुहागतेन गह्वरादायातेन, अस्य सिंहस्य, प्रतिस्वनेन प्रतिध्वनिना, शिलोच्चयोऽपि हिमाचलोऽपि, प्रीत्या प्रेम्णा, तमेव सिंहोक्तमेव, अर्थम् अभिधेयम्, वक्तव्यमिति यावत्। क्षितिपालं महीपतिं दिलीपम्, उच्चैः उच्चस्वरेण, अभाषतेव नूनमकथयत्। सिंहोक्तं पर्वतोऽप्यनुमोदितवानिव।

समासः—मृगाणामिन्द्रः मृगेन्द्रः, तस्मिन् मृगेन्द्रे। गुहायाः आगतः गुहागतः ( पं०त० ), तेन गुहागतेन। क्षितिं पालयतीति क्षितिपालः, तम् क्षितिपालम्।

कोशः—'सिंहो मृगेन्द्रः पञ्चास्यः' 'ध्वनिध्वानरवस्वनाः' 'महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः । अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥' 'मुत्प्रीतिः प्रमदो हर्षः' 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।' इत्यमराः ।

भावार्थः—श्लोकचतुष्टयोक्तं कथयित्वा सिंहः तूष्णीम् अभवत्, पर्वतोऽपि मुदा गुहागतप्रतिध्वनिना सिंहोक्तम् अनुमोदितवानिव ।

हिन्दीश्लोकार्थः—सिंह के इतना कहकर चुप हो जाने पर गुफा से आई हुई प्रतिध्वनि से पर्वत भी प्रेम से मानो उसी बात को राजा से उच्च स्वर में कहा ॥५१॥

निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥५२॥

सञ्जीविनी—निशम्येति । देवानुचरस्येश्वरकिङ्करस्य सिंहस्य वाचं निशम्य मनुष्यदेवो राजा पुनरप्युवाच । किम्भूतः सन् । तेन सिंहेन यदध्यासितं व्याक्रमणम् । 'नपुंसके भावे क्तः' । तेन कातरे अक्षिणी यस्यास्तया । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् । 'षिद्गौरादिभ्यश्च' इति ङीष् । किं वा वक्ष्यतीति भीत्यैवं स्थितयेत्यर्थः । धेन्वा निरीक्ष्यमाणः । अत एव सुतरां दयालुः सन् । सुतरामित्यत्र 'द्विवचनविभज्य–' इत्यादिना सुशब्दात्तरप् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यनेनाम्प्रत्ययः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा ।

अन्वयः—देवानुचरस्य वाचं निशम्य मनुष्यदेवः तदध्यासितकातराक्ष्या धेन्वा निरीक्ष्यमाणः सुतरां दयालुः 'सन्' पुनरपि उवाच ।

वाच्य०—तदध्यासितकातराक्ष्या धेन्वा निरीक्ष्यमाणेन, दयालुना सता मनुष्यदेवेन पुनरपि ऊचे । ( अत्रायं भाव० )

चन्द्रिका—देवानुचरस्य शिवसेवकस्य, सिंहस्येति यावत्, वाचं वचनं, निशम्य आकर्ण्य, मनुष्यदेवः नरश्रेष्ठो दिलीपः, पुनरपि भूयोऽपि, उवाच अकथयत्, किम्भूतः सन् ? तदध्यासितेन सिंहाधिष्ठानेन, कातराक्ष्या भयचञ्चलनेत्रया, धेन्वा गवा, निरीक्ष्यमाणः विलोक्यमानः, अग्रे किमयं कथयिष्यति इति सभयं धेनू राजानं पश्यन्ती आसीत् इत्यर्थः । अत एव सुतरां नितरां, दयालुः कृपार्द्रः सन्निति शेषः, उवाचेत्यनेन सम्बन्धः ।

समासः—देवस्य अनुचरः, देवानुचरः, तस्य देवानुचरस्य । मनुष्याणां मनुष्येषु वा देवः मनुष्यदेवः (ष० त०, स० त०) । तेन ( तस्य वा ) अध्यासितं तदध्यासितम् ( तृ० त० ), तदध्यासितेन कातरे अक्षिणी यस्याः सा कातराक्षी ( बहु० ), तया कातराक्ष्या ।

कोशः—'गीर्वाग् वाणी सरस्वती' 'अधीरे कातरस्त्रस्ते भीरुभीलुकभीरुकाः' 'स्याद् दयालुः कारुणिकः' 'ईक्षणं चक्षुरक्षिणी' इत्यमरः ।

भावार्थः—सिंहस्य पूर्वोक्तां वाणीमाकर्ण्य राजा वक्तुमुपचक्रमे, तदा सिंहाक्रान्ता नन्दिनी 'राजा किमुत्तरं दास्यति, सिंहस्य तां विहाय स्वदेहरक्षणोपदेशं स्वीकरोति वा' इति सभयं राजानं पश्यति स्म, अत एव राज्ञो दयाभावः तदा अत्यन्तं वृद्धि गत आसीत् ।

हिन्दीश्लोकार्थः—शिवजी के अनुचर सिंह की वाणी सुनकर मनुष्यों में श्रेष्ठ दिलीप पुनः सिंह से बोले. तब सिंह के अपने ऊपर अधिष्ठित होने के कारण कातर नयनों वाली नन्दिनी से देखे जाने पर राजा अत्यन्त दयार्द्र हो गये थे।५२।

क्षतात्किल त्रायत इत्युदग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥५३॥

सञ्जीविनी—क्षतादिति । 'क्षणु हिंसायाम्' इति धातोः सम्पदादित्वात्क्विप्। 'गमादीनाम्' इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम् । क्षतो नाशात् त्रायत इति क्षत्त्रः । सुपीति योगविभागात्कः । तामेतां व्युत्पत्ति कविरर्थतोऽनुक्रामति–क्षतादित्यादिना । उदग्र उन्नतः । क्षत्त्रस्य क्षत्त्रवर्णस्य शब्दो वाचकः क्षत्त्रशब्द इत्यर्थः । क्षतात्त्रायत इति व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु । नाश्वकर्णादिवत्केवलरूढः किन्तु पङ्कजादिवद्योगरूढ इत्यर्थः । ततः किमित्यत आह—तस्य क्षत्त्रशब्दस्य विपरीतवृत्तेर्विरुद्धव्यापारस्य क्षतस्त्राणमकुर्वतः पुंसो राज्येन किम् । उपक्रोशमलीमसैर्निन्दामलिनैः । 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे' इत्यमरः । 'ज्योत्स्नातमिस्रा०' इत्यादिना मलीमसशब्दो निपातितः । 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः । तैः प्राणैर्वा किम् । निन्दितस्य सर्वं व्यर्थमित्यर्थः । एतेन 'एकातपत्रम्' (२।४७) इत्यादिना श्लोकद्वये नोक्तं प्रत्युक्तमिति वेदितव्यम् ।

अन्वयः—उदग्रः क्षत्त्रस्य शब्दः क्षतात् त्रायते इति भुवनेषु रूढः किल ? तद्विपरीतवृत्तेः राज्येन किम् ? उपक्रोशमलीमसैः प्राणैः वा किम् ?

वाच्य०—उदग्रेण क्षत्त्रस्य शब्देन रूढेन किल 'भूयते' (अभूयत वा, भाव०)

चन्द्रिका—उदग्रः उन्नतः, श्रेष्ठ इति यावत्, क्षत्रस्य शब्दः 'क्षत्र' इति शब्दः पदं, क्षतात् नाशात्, त्रायते रक्षति, इति हेतोः । भुवनेषु लोकेषु, रूढः प्रसिद्धः, किलेति प्रश्ने । तस्मात् क्षतत्राणात्, विपरीता विरुद्धा, क्षता रक्षणरूपेति यावत् , वृत्तिः व्यवहारः, यस्य तादृशस्य, पुरुषस्य राज्येन राजत्वेन किम् ? न किमपि प्रयोजनमित्यर्थः, 'क्षत्त्र' शब्दसार्थकताया अकरणात् निष्प्रयोजनं राज्यमित्यर्थः । उपक्रोशेन निन्दया, मलीमसैः मलिनैः, प्राणैः असुभिः, वा किम्प्रयोजनं कि फलम् ? 'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति भावः ।

समासः—तस्य विपरीता तद्विपरीता-वृत्तिर्यस्य (बहु०) सः. तद्विपरीतवृत्तिः, तस्य तद्विपरीतवृत्तेः । उपक्रोशेन मलीमसाः उपक्रोशमलीमसाः, तैः उपक्रोशमलीमसैः ( तृ० त० )।

कोषः—'उक्त्वात्रांसुमन्तःकोशाः' 'शस्ये धान्यस्तु बाधकाः' 'किं कुत्सायां वितर्के च' 'वार्तासंभाव्ययोः किल' 'अवक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे' 'मलीमसन्तु मलिनं कच्चरं मलदूषितम्,' 'पुंसि भूम्न्यसवः प्राणाः' इति चामरः।

भावार्थः—कष्टात् त्राता 'क्षत्त्रः' इति संसारे प्रसिद्धः, सङ्कटात् नाशाद्वा परित्राणम् चकुर्वन् स राजा कथं? तादृशस्य पुरुषस्य निन्दितैः प्राणैः वा किं प्रयोजनम्? निष्फलं तस्य जीवितमिति भावः।

हिन्दीश्लोकार्थः—श्रेष्ठ जो 'क्षत्र' शब्द है वह 'नाश से बचाने वाला' इस अर्थ से संसार में प्रसिद्ध है न? (न केवल 'डित्थादिवत्' या 'क्षीरसागर' आदिवत् संकेतमात्र है।) इस शब्दार्थ के विपरीत (नाशसे नहीं बचाना) चलनेवाले पुरुष को राज्य से क्या प्रयोजन है? उन कलंकित प्राणों से भी क्या फल होगा? ॥५३॥

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम्।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयाऽस्याम् ॥५४॥

सञ्जीविनी—कथमिति। अनुनयः कोपापनयः। चकारो वाकारार्थः। महर्षेरनुनयो वाऽन्यासां पयस्विनीनां दोग्ध्रीणां गवां विश्राणनाद्दानात्। 'त्यागो विहापितं दानमुत्सर्जनविसर्जने। विश्राणनं वितरणम्' इत्यमरः। कथं नु शक्यः। न शक्य इत्यर्थः। अत्र हेतुमाह—इमां गां सुरभेः कामधेनोः 'पञ्चमी विभक्ते' इति पञ्चमी। अनूनामन्यूनामवेहि जानीहि। तर्हि कथमस्याः पारवशीऽभूदित्याह—रुद्रौजसेति। अस्यां गवि, त्वया कर्त्रा प्रहृतं तु प्रहारस्तु। नपुंसके भावे क्तः। रुद्रौजसेश्वरसामर्थ्येन न तु स्वयमित्यर्थः। 'सप्तम्यधिकरणे च' इति सप्तमी।

अन्वयः—महर्षेः अनुनयः च अन्यपयस्विनीनां विश्राणनात् कथं नु शक्यः? इमां सुरभेः अनूनाम् अवेहि। अस्यां त्वया प्रहृतन्तु रुद्रौजसा।

वाच्य०—महर्षेः अनुनयेन शक्येन 'भूयेत'। इयं सुरभेः अनूना 'त्वया' अवेयताम् (कर्म०)। त्वं रुद्रौजसा अस्यां प्रहृतम् 'अकरोः' (कर्तृ०)।

चन्द्रिका—साम्प्रतं सिंहस्य नन्दिन्याम् अन्यगोसावारणत्वविचारो निरस्यते। महर्षेः वसिष्ठमहामुनेः, अनुनयः कोपप्रसादनम्, अन्यपयस्विनीनाम् अपरासां भूरिक्षीराणां गवाम् विश्राणनात् दानात्, कथं नु केन वा प्रकारेण, शक्यः? साध्यः? कोऽत्र सन्देह इति चेदाह—इमां नन्दिनीम्, सुरभेः कामधेनोः, अनूनाम् अहीनाम्, कामधेनुसमानामित्यर्थः, अवेहि मन्यस्व। तर्हि मया कथं पराक्रान्तमिति चेदाह—अस्यां नन्दिन्याम्, त्वया भवता, सिंहेनेति यावत्, प्रहृतन्तु प्रहारस्तु रुद्रौजसा महादेवप्रभावेण, नन्दिन्यां त्वत्कृतमाक्रमणं रुद्रतेजोमूलकमिति भावः। 'प्रहृतम्' इत्यत्राविवक्षितकर्मत्वात् भावे क्तः।

समासः—महांश्चासौ ऋषिश्च (कर्म०) महर्षिः तस्य महर्षेः। अन्याश्च ताः

पयस्विन्यश्च अन्यपयस्विन्यः, तासाम् अन्यपयस्विनीनाम् (कर्म०)। न ऊना अनूना ( नञ्त० ) ताम् अनूनाम्। रुद्रस्य ओजः रुद्रौजः, तेन (ष०त०) रुद्रौजसा।

कोशः—'ऋषयः सत्यवचसः' 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरौ। 'ओजो दीप्तिप्रकाशयोः' इत्यनेकार्थ०।

भावार्थः—अन्यगवां प्रदानेन महर्षेः क्रोधः कथम् अपसरेत्? नेयं दुग्धमात्र-दात्री गौः, इयं कामधेनुसमाना कामदोग्ध्री। अस्यां त्वत्पराक्रमस्तु महादेवप्रतापादेव।

हिन्दीश्लोकार्थः—महर्षि वसिष्ठजी के क्रोध का वारण अन्य गायों के दान से किस प्रकार हो सकता है? इस नन्दिनी को कामधेनु के सदृश ही मानो। इस पर तुम्हारा आक्रमण तो शिवजी के प्रताप से ही संभव हुआ है॥ ५४॥

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियाऽर्थः॥५५॥

सञ्जीविनी—सेयमिति। सेयं गौर्मया निष्क्रीयते प्रत्याह्रियतेऽनेन परिगृहीत-मिति निष्क्रयः प्रतिशीर्षकम्। 'एरच्' इत्यच्प्रत्ययः। स्वदेहार्पणमेव निष्क्रयस्तेन भवत्तस्त्वत्तः। पञ्चम्यास्तसिल्। मोचयितुं न्याय्या न्यायादनपेता। युक्तेत्यर्थः। 'धर्मपथ्यर्थन्यायादनपेते' इत्यनेन यत्प्रत्ययः। एवं सति तव पारणा भोजनं विहता न स्यात्, मुनेः क्रिया होमादिः स एवार्थः प्रयोजनम्। स चालुप्तो भवेत्। स्वप्राण-व्ययेनापि स्वामिगुरुधनं संरक्ष्यमिति भावः।

अन्वयः—सेयं मया स्वदेहार्पणनिष्क्रयेण भवत्तः मोचयितुं न्याय्या। 'एवं सति' तव पारणा विहता न स्यात्, मुनेः क्रियार्थः अलुप्तश्च भवेत्।

वाच्य०—तया अनया भवत्तः मोचयितुं न्याय्यया 'भूयते'। तव पारणया विहतया न 'भूयेत' क्रियार्थेन च अलुप्तेन 'भूयेत'। ( वाक्यत्रयेऽपि कर्माभावात् भावे प्रयोगाः )।

चन्द्रिका—सेयं कामधेनुसदृशी मद्रक्ष्या च धेनुः, मया दिलीपेन, स्वदेहस्य निजदेहस्य, अर्पणं त्यागः, एव निष्क्रयः मूल्यम्, तेन स्वदेहार्पणनिष्क्रयेण, भवत्तः त्वत्सकाशात्, मोचयितुं स्वतन्त्रीकर्तुम्, न्याय्या उचिता। एवं सति मद्देह-दानेन धेनुमोचने कृते सति, तव भवतः पारणा व्रतान्तभोजनम्, विहता लुप्ता, न स्याद् न भवेत्, मुनेः वसिष्ठस्य, क्रियार्थः होमादिसाधनीभूतः, अलुप्तश्च अनष्टश्च, भवेत् स्यात्। अनेन कार्येण त्वत्पारणाया अविघातः गुरुधनरक्षणमिति द्वयमपि कार्यं सेत्स्यति इति भावः।

समासः—स्वस्य देहः स्वदेहः ( ष०त० ) स्वदेहस्यार्पणं स्वदेहार्पणम् ( ष०त० ) स्वदेहार्पणमेव निष्क्रयः स्वदेहार्पणनिष्क्रयः, तेन स्वदेहार्पणनिष्क्रयेण। न्यायात् अनपेता न्याय्या। न लुप्तः अलुप्तः ( नञ्त० )। क्रियाया अर्थः क्रियार्थः ( ष०त० )।

कोश:—'उपाय: कर्म चेष्टा च चिकित्सा च नव क्रिया:' 'अर्थोऽभिधेय-रैवस्तुप्रयोजननिवृत्तिषु' इत्यमरौ।

भावार्थ:—कामधेनुकल्पा मद्रक्ष्या इयं धेनुर्नन्दिनी मद्देहं तत्स्थाने समर्प्य त्वत्तो मोचनीयैव। इदमेवोचितं भवेत्। एवं करणेन तव पारणाऽपि भविष्यति, गुरो: होमादिसाधनभूतं गोधनमपि रक्षितं भवति।

हिन्दीश्लोकार्थ:—कामधेनु के समान इस नन्दिनी को अपना देह समर्पण कर आपसे छुड़ाना न्यायसम्मत है। ऐसा करने पर आपका व्रतान्तभोजन भी नष्ट न होगा और वसिष्ठजी की होमादिसाधनभूत धेनु भी सुरक्षित रहेगी ॥५५॥

भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥५६॥

सञ्जीविनी—भवानिति। परवान्स्वामिपरतन्त्रो भवानपि। 'परतन्त्र: पराधीन: परवान्नाथवान्' इत्यमर:। इदं वक्ष्यमाणमवैति। भवताऽनुभूयत एवेत्यर्थ:। 'शेषे प्रथम:' इति प्रथमपुरुष:। किमित्यत आह—हि यस्माद्धेतो:। 'हि हेताववधारणे' इत्यमर:। तव देवदारौ विषये महान् यत्न:। महता यत्नेन रक्ष्यत इत्यर्थ:। इदंशब्दोक्तमर्थं दर्शयति—स्थातुमिति। रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयमक्षतेनाव्रणेन, नियुक्तेनेति शेष:। नियोक्तु: स्वामिनोऽग्रे स्थातुं शक्यं न हि।

अन्वय:—परवान् भवानपि इदम् अवैति, हि तव देवदारौ महान् यत्न: 'अस्ति'। रक्ष्यं विनाश्य स्वयम् अक्षतेन नियोक्तु: अग्रे स्थातुं न शक्यं हि।

वाच्य०—परवता भवता इदम् अवेयते (कर्म०)। तव देवदारौ महता यत्नेन 'भूयते'। रक्ष्यं विनाश्य स्वयमक्षत: स्थातुं न शक्नुयात्। (भाव०)

चन्द्रिका—परवान् परतन्त्र:, भवानपि श्रीमानपि, इदं कर्तव्यगुरुत्वम्, अवैति जानाति। हि यत:, तव भवत:, देवदारौ देवदारुतरुरक्षणे, महान् भूयान् यत्न: प्रयास:। अस्तीति शेष:। रक्ष्यं रक्षितुं योग्यं वस्तु, विनाश्य हापयित्वा, नाशयित्वेति यावत्। स्वयम् आत्मना, अक्षतेन सकुशलेन, सेवकेनेत्यर्थ:। नियोक्तु: स्वामिन:, अग्रे पुर:, स्थातुं सन्निधातुम्, शक्यं साध्यम्, नहि नैव। स्वामिप्रदत्तं वस्तु हापयित्वा स्वयञ्चाव्रण: तत्संमुखे संकोचात् स्थातुं नैव शक्नोतीत्यर्थ:।

समास:—पर: (स्वामी) अस्यास्तीति परवान्। रक्षितुं योग्यं रक्ष्यम्, तत् रक्ष्यम्। न क्षत: अक्षत:।

कोश:—'परतन्त्र: पराधीन: परवान्नाथवानपि।' 'स्वयमात्मना' इत्यमरौ।

भावार्थ:—अहमिव भवानपि परतन्त्र:, अहं गोरक्षणे नियुक्तश्चेत् त्वमपि देवदारुरक्षणे नियुक्त: 'यत्नेन देवदारुं रक्षसि। उचितमेवेदम्। स्वामिन: समक्षं तदीयं वस्तु विनाश्य स्वयञ्चाक्षतशरीर: लज्जासङ्कोचाभ्याम् अभिभूत: स्थातुं नैव पारयेदिति भाव:।

हिन्दीश्लोकार्थः—पराधीन आप भी इस बात को जानते ही हो, आपका भी देवदारु के रक्षण में बड़ा ही प्रयास रहता है। रक्षणीय वस्तु का नाश करके सेवक स्वयम् कुछ भी आघात न पाकर ( उसके रक्षण में ) स्वामी ( मालिक ) के सामने ठहर ही नहीं सकता। अर्थात् संकोच-लज्जा के मारे स्वामी के सामने जा ही नहीं सकता ॥ ५६ ॥

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥५७॥

सञ्जीविनी—किमिति। किमपि किं वाऽहं तवाहिंस्योऽवध्यो मतश्चेत्तर्हि मे यश एव शरीरं तस्मिन्दयालुः कारुणिको भव। 'स्याद्दयालुः-कारुणिकः' इत्यमरः। ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशोऽस्त आह—एकान्तेति। मद्विधानां मादृशानां विवेकिनामेकान्तविध्वंसिष्ववश्यविनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरेष्वनास्था खल्वनपेक्षैव। 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः।

अन्वयः—किमपि अहं तव अहिंस्यः मतः चेत् 'तदा' मे यशःशरीरे दयालुः भव। मद्विधानाम् एकान्तविध्वंसिषु भौतिकेषु पिण्डेषु अनास्था खलु।

वाच्य०—मया तवाहिंस्येन 'भूयते' त्वया दयालुना 'भूयताम्'। भौतिकेषु पिण्डेषु मद्विधानाम् अनास्थया खलु 'भूयते' ( सर्वत्र भाववाच्यम् )।

चन्द्रिका—किमपि यद्वा, अहं दिलीपः, तव सिंहस्य, अहिंस्यः असारणीयः, मतः अभीष्टः, चेत् यदि, 'तदा' मे मम, यशःशरीरे कीर्तिदेहे, दयालुः, करुणायुक्तः, भव भवेः। मद्विधानां मादृशानाम्, एकान्तविध्वंसिषु अवश्यंभाविनाशेषु, भौतिकेषु पृथिव्यादिपञ्चविकारेषु, पिण्डेषु देहेषु, अनास्था खलु अनिच्छैव।

समासः—हिंसितुं योग्यः हिंस्यः, न हिंस्यः अहिंस्यः (नञ्त०) यश एव शरीरं यशःशरीरम्, ( अवधारणापूर्वककर्म० ) तस्मिन् यशःशरीरे। एकान्तं विध्वंसिनः एकान्तविध्वंसिनः, तेषु एकान्तविध्वंसिषु। भूतानां विकाराः भौतिकाः, तेषु भौतिकेषु। मम विधा इव विधा येषां ते मद्विधाः, तेषां मद्विधानाम् (बहु०)।

कोशः—'यशः कीर्तिः समज्या च' 'शरीरं वर्ष्म विग्रहः' 'स्याद् दयालुः कारुणिकः' 'तीव्रैकान्तनितान्तानि' इत्यमरः। 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः। 'पिण्डो गोले बले सान्द्रे देहागारैकदेशयोः। देहभागे निकाये च' इति मेदिनी।

भावार्थः—यदि मम हिंसा न कर्तव्येति ते मनश्चेत् मम यशोदेहं पालय। गां हत्वा मद्देहं पालयसि चेत् यशस्तु कलङ्कितं भवेदेव। मादृशा अवश्यनाशिषु पाञ्चभौतिकस्थूलदेहेषु निःस्पृहा एव भवन्ति।

हिन्दीश्लोकार्थः—किंवा यदि तुम मेरी कुछ हिंसा न करना चाहते हो तो मेरी कीर्ति रूपी शरीर पर दयालु बन जाओ। मेरे जैसे लोगों की, अवश्य ही

नष्ट होनेवाले पृथिवी-जल-तेजो-वायु-आकाश रूप पांच भूतों के विकारभूत शरीरों पर इच्छा नहीं रहती है ॥ ५७ ॥

सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ सङ्गतयोर्वनान्ते ।
तद्भूतनाथानुग ! नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ॥५८॥

सञ्जीविनी—सम्बन्धमिति । सम्बन्धं सख्यम् । आभाषणमालापः पूर्वं कारणं यस्य तमाहुः । 'स्यादाभाषणमालापः' इत्यमरः । स तादृक्सम्बन्धो वनान्ते सङ्गतयोर्मिलितयोर्नावावयोर्वृत्तो जातः । तत्तस्माद्धेतोर्हे भूतनाथानुग ! शिवानुचर ! एतेन तस्य महत्त्वं सूचयति । अत एव सम्बन्धिनो मित्रस्य मे प्रणयं याच्ञाम् । 'प्रणयास्त्वमी । विश्रम्भयाच्ञाप्रेमाणः' इत्यमरः । विहन्तुं, नार्हसि ।

अन्वयः—सम्बन्धम् आभाषणपूर्वम् आहुः । सः वनान्ते सङ्गतयोः नौ वृत्तः । तद् भूतनाथानुग ! त्वं सम्बन्धिनः मे प्रणयं विहन्तुं नार्हसि ।

वाच्य०—सम्बन्ध आभाषणपूर्वं उच्यते 'मनीषिभिः' ( कर्मवाच्य० ) । तेन वृत्तेन 'अभूयत' ( भाववा० ) । त्वया प्रणयो विहन्तुं नार्हते ( भाववा० ) ।

चन्द्रिका—सम्बन्धं मैत्र्यम्, आभाषणं संलापः, पूर्वं हेतुः, यस्य तम् आभाषणपूर्वम्, आहुः ब्रुवन्ति, 'मनीषिणः' इति शेषः । सः सम्बन्धः, वनान्ते अरण्योदरे, सङ्गतयोः मिलितयोः, नौ आवयोः वृत्तः जातः । तत् तस्मात्, भूतनाथस्य महादेवस्य, अनुचर ! सेवक ! त्वं सिंहः, सम्बन्धिनः मित्रस्य, मे मम, प्रणयं याच्ञाम्, प्रार्थनां निवेदनं वा, विहन्तुं विलोपितुम्, नार्हसि न योग्योऽसि । मैत्रीनिर्वाहार्थं मम याच्ञां प्रत्याख्यातुं न क्षमो भवानित्यर्थः ।

समासः—आभाषणं पूर्वं यस्य स आभाषणपूर्वः ( बहु० ), तम् आभाषणपूर्वम् । वनस्य अन्तः वनान्तः, तस्मिन् वनान्ते ( ष०त० ) । भूतानां नाथः भूतनाथः, भूतनाथस्य अनुगः भूतनाथानुगः, तत्संबुद्धौ हे भूतनाथानुग ! सम्बन्धोऽस्यास्तीति सम्बन्धी, तस्य सम्बन्धिनः ।

कोशः—'स्यादाभाषणमालापः' 'प्रणयास्त्वमी । विश्रम्भयाच्ञाप्रेमाणः' इत्यमरौ । 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः ।' इति हैमः ।

भावार्थः—आलापात् मैत्र्यं भवतीति विद्वांसो वदन्ति, आवयोः अरण्ये मिलितयोः एतावानालापः सम्पन्नः । तस्मान्मित्रस्य मे निवेदनं निराकर्तुं तव नोचितम् ।

हिन्दीश्लोकार्थः—'विद्वान्' कहते हैं कि बातचीत से मित्रता हो जाती है। वह मित्रता जंगल में मिले हुए हम दोनों में हो चुकी है। इसलिए शंकरानुचर सिंह ! मित्र होकर तुम मेरी प्रार्थना का भंग करने के लिए योग्य नहीं हो ॥५८॥

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥५९॥

सञ्जीविनी—तथेतीति । तथेति गामुक्तवते हरये सिंहाय । 'कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः' इति शाश्वतः । सद्यस्तत्क्षणे प्रतिष्टम्भात्प्रतिबन्धाद्विमुक्तो बाहुर्यस्य स दिलीपः । न्यस्तशस्त्रस्त्यक्तायुधः सन् स्वदेहम् । आमिषस्य मांसस्य । 'पललं क्रव्यमामिषम्' इत्यमरः । पिण्डं कवलमिव । उपानयत्समर्पितवान् । एतेन निर्ममत्वमुक्तम् ।

अन्वयः—तथा इति गाम् उक्तवते हरये सद्यः प्रतिष्टम्भविमुक्तबाहुः सः न्यस्तशस्त्रः 'सन्' स्वदेहम् आमिषस्य पिण्डम् इव उपानयत् ।

वाच्य०—प्रतिष्टम्भविमुक्तबाहुना तेन न्यस्तशस्त्रेण स्वदेह आमिषस्य पिण्ड इव उपानीयत ( कर्म० ) ।

चन्द्रिका—तथेति 'तथा अस्तु' इति, गां वचनम्, उक्तवते कथितवते हरये सिंहाय, सद्यः तत्क्षणे, प्रतिष्टम्भात् निरोधात्, विमुक्तः त्यक्तः, बाहुः भुजो यस्य स तथोक्तः । सः दिलीपः, न्यस्तशस्त्रः मुक्तायुधः, सन् भवन्, स्वदेहं निजशरीरम्, आमिषस्य मांसस्य, पिण्डमिव गोलकमिव, उपानयत् उपाहरत् । उपायनमकरोदित्यर्थः ।

समासः—प्रतिष्टम्भात् विमुक्तः ( पं०त० ) प्रतिष्टम्भविमुक्तः, प्रतिष्टम्भविमुक्तः बाहुः यस्य सः ( बहु० ) । न्यस्तं शस्त्रं येन सः न्यस्तशस्त्रः ( बहु० ) । स्वस्य देहः स्वदेहः ( ष०त० ), तं स्वदेहम् ।

कोशः—'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' 'स्वर्गेषुपशुवाग्वज्रदृङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः ॥' 'पिशितं तरलं मांसं पललं क्रव्यमामिषम्' 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।' इति चामराः ।

भावार्थः—'तथा भवतु' इति अङ्गीकृतवते सिंहाय तत्क्षण एव प्रतिरोधाद् मुक्तभुजः दिलीपः स्वशरीर मांसपिण्डमिव उपहृतवान् ।

हिन्दीश्लोकार्थः—'वैसा ही हो' इस वचन को कहे हुए सिंह के लिए उसी क्षण में बन्धन से छूटी बाहुवाले राजा दिलीप ने शस्त्र त्यागकर अपने शरीर को मांसपिण्ड के समान भेंट किया ॥ ५९ ॥

तस्मिन् क्षणे पालयितुं प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥६०॥

सञ्जीविनी—तस्मिन्निति । तस्मिन्क्षणे उग्रं सिंहनिपातमुत्पश्यत उत्प्रेक्षमाणस्य तर्कयतोऽवाङ्मुखस्याधोमुखस्य 'स्यादवाङ्प्यधोमुखः' इत्यमरः । प्रजानां पालयितू राज्ञ उपर्युपरिष्टात् 'उपर्युपरिष्टात्' इति निपातः । विद्याधराणां देवयोनिविशेषाणां हस्तैर्मुक्ता पुष्पवृष्टिः पपात ।

अन्वयः—तस्मिन् क्षणे उग्रं सिंहनिपातम् उत्पश्यतः अवाङ्मुखस्य प्रजानां पालयितुः उपरि विद्याधरहस्तमुक्ता पुष्पवृष्टिः पपात ।

वाच्य०—विद्याधरहस्तमुक्तया पुष्पवृष्ट्या पेते ( भाववा० ) ।

चन्द्रिका—तस्मिन् क्षणे सद्यः, उग्रं भीषणं, सिंहनिपातं मृगेन्द्रनिपतनम्, उत्पश्यतः तर्कयतः, अवाङ्मुखस्य अधोवदनस्य, प्रजानां जनानां, पालयितृ रक्षकस्य उपरि ऊर्ध्वभागे विद्याधराणां देवभेदानाम्, हस्तैः करैः, मुक्ता पतिता, पुष्पवृष्टिः प्रसूनवर्षम्, पपात न्यपतत् ।

समासः—उत्पश्यतीति उत्पश्यन्, तस्य उत्पश्यतः । सिंहस्य निपातः सिंहनिपातः (ष०त०) तं सिंहनिपातम् । अवाक् मुखं यस्य सः अवाङ्मुखः ( बहु० ), तस्य अवाङ्मुखस्य । विद्याधराणां हस्तैः मुक्ता विद्याधरहस्तमुक्ता (ष०त०,तृ०त०), पुष्पाणां वृष्टिः पुष्पवृष्टिः ।

कोशः—'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' 'भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ।' 'स्यादवाङ्प्यधोमुखः' 'विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥' इत्यमराः ।

भावार्थः—तदा 'सिंहः प्रपतिष्यति' इत्युत्प्रेक्षमाणस्य अधोमुखस्य दिलीपस्य शिरसि 'गवार्थे सम्राडपि विशङ्कं स्वदेहं मुञ्चति अहो !!' इति साश्चर्यतोषं विद्याधरैः कृता पुष्पवृष्टिः न्यपतत् इति भावः ।

हिन्दीश्लोकार्थः—उस समय 'सिंह का भयंकर आक्रमण होता ही होगा' ऐसी कल्पना करनेवाले नीचे मुख किए हुए राजा दिलीप के ऊपर विद्याधरों के हाथों से की गई पुष्पवृष्टि गिरी ॥ ६० ॥

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥ ६१ ॥

सञ्जीविनी—उत्तिष्ठेति । राजा अमृतमिवाचरतीत्यमृतायमानं वत् 'उपमानादाचारे' इति क्यच् । ततः शानच् । उत्थितमुत्पन्नं 'हे वत्स! उत्तिष्ठ' इति वचो निशम्य श्रुत्वा । उत्थितः सन् । अस्तेः शतृप्रत्ययः । अग्रतोऽग्रे प्रस्रवः क्षीरस्रावोऽस्ति यस्याः सा तां प्रस्रविणीं गां स्वां जननीमिव ददर्श । सिंहं न ददर्श ।

अन्वयः—राजा अमृतायमानम् उत्थितं 'वत्स ! उत्तिष्ठ' इति वचः निशम्य उत्थितः सन् अग्रतः प्रस्रविणीं गां स्वां जननीम् इव ददर्श, सिंहं न 'ददर्श' ।

वाच्य०—राज्ञा उत्थितेन सता प्रस्रविणी गौः स्वा जननीव ददृशे, सिंहो न ददृशे ( कर्म० ) ।

चन्द्रिका—राजा दिलीपः, अमृतायमानं सुधावत् स्थितम्, उत्थितं निर्गतम्, 'हे वत्स ! शिशो उत्तिष्ठ ! उत्थितो भव' इति ईदृशम्, वचः भाषितम्, निशम्य श्रुत्वा, उत्थितः ऊर्ध्वम् अवस्थितः, सन् भवन्, अग्रतः पुरस्तात्, प्रस्रविणीं दुग्धस्रावतीम्, गां धेनुं नन्दिनीम्, स्वां निजाम्, जननीम् इव मातरमिव, ददर्श अपश्यत्, सिंहं मृगेन्द्रम्, न ददर्श नापश्यत् ।

समासः—अमृतवत् आचरतीत्यमृतायमानम्, तत् पुनस्तदेव । प्रस्नवोऽस्या अस्तीति प्रस्नविणी, तां प्रस्नविणीम् ।

कोशः—'पुत्रादौ तर्णके वर्षे वत्सः' इति रुद्रः । 'पीयूषममृतं सुधा' 'भाषितं वचनं वचः' 'स्यात्पुरः पुरतोऽग्रतः' 'माहेयी सौरभेयी गौः' 'जनयित्री प्रसूर्माता जननी' 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमराः ।

भावार्थः—राजा 'उत्तिष्ठ वत्स' इति मधुरं वचनम् आकर्ण्य संमुखे स्थितां स्नेहेन क्षीरं स्रवन्तीं निजमातरमिव स्थितां धेनुमपश्यत्, न पुनः सिंहम् ।

हिन्दीश्लोकार्थः—राजा दिलीपने 'बच्चा ! उठो' ऐसे अमृत के समान निकले हुए वचन को सुनकर उठते हुए सामने स्थित वात्सल्य से दूध बहाने वाली गौ नन्दिनी को अपनी माँ के समान देखा, न कि सिंह को ॥ ६१ ॥

**तं विस्मितं धेनुरुवाच साधो ! मायां मयोद्भाव्य परीक्षितोऽसि ।**
**ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥६२॥**

सञ्जीविनी—तमिति । विस्मितमाश्चर्यं गतम् । कर्तरि क्तः । दिलीपं धेनुरुवाच । किमित्यत्राह–हे साधो ! मया मायामुद्भाव्य कल्पयित्वा परीक्षितोऽसि । ऋषिप्रभावान्मय्यन्तको यमोऽपि प्रहर्तुं न प्रभुर्न समर्थः । अन्ये हिंस्रा घातुकाः 'शरारुर्घातुको हिंस्रः' इत्यमरः । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इत्यादिना रप्रत्ययः । किमुत सुष्ठु न प्रभव इति योज्यम् । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः ।

अन्वयः—विस्मितं तं धेनुः उवाच–साधो ! मया मायाम् उद्भाव्य 'त्वं' परीक्षितोऽसि । ऋषिप्रभावात् मयि अन्तकोऽपि प्रहर्तुं न प्रभुः 'अस्ति' किमुत अन्यहिंस्राः ? ( प्रहर्तुं न प्रभवः सन्ति इति वक्तव्यम् ) ।

वाच्य०—विस्मितः स धेन्वा ऊचे ( कर्म० )–अहं त्वां परीक्षितवती अस्मि, ( कर्तृ० ) । अन्तकेनापि प्रभुणा न भूयते, किमुतान्यहिंस्रैः 'प्रभुभिः न भूयते' इति वक्तव्यम् ।

चन्द्रिका—विस्मितं विस्मयान्वितम्, तं दिलीपम्, धेनुः गौः, उवाच अवदत्, साधो भद्रपुरुष ! मया, मायां छलम्, उद्भाव्य प्रादुर्भाव्य, 'त्वं' परीक्षितः सम्यग् दृष्टः, असि भवसि, ऋषिप्रभावात् मुनिवसिष्ठौजसः, मयि नन्दिन्याम्, अन्तकोऽपि यमोऽपि, प्रहर्तुं ताडयितुम्, न नैव, प्रभुः समर्थः । किमुत किं पुनः, अन्यहिंस्राः इतरघातुकप्राणिनः सिंहादयः, न प्रभवः–इत्यत्र वक्तव्यमिति शेषः ।

समासः—ऋषेः प्रभावः ऋषिप्रभावः ( ष०त० ), तस्मात् ऋषिप्रभावात् । अन्तं करोतीत्यन्तकः । अन्ये च ते हिंस्राश्च अन्यहिंस्राः ( कर्मधा० ) ।

कोशः—'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।' 'प्रभुः परिवृढोऽधिपः' 'शरारुर्घातुको हिंस्रः' 'आहो उताहो किमुत विकल्पे किं किमूत च' इत्यमराः ।

भावार्थः—यदा राजा सर्वमिदं विलोक्य साश्चर्यो भवति तदा नन्दिनी वदति तं हे भद्र ! मया मायामाविर्भाव्य त्वत्परीक्षा कृता, वसिष्ठप्रतापात् मृत्युरपि न मत्प्रहारे समर्थः । किं पुनः सिंहादयो हिंस्राः प्रभवन्तीति वक्तव्यम् ।

हिन्दीश्लोकार्थः—आश्चर्यचकित राजा से नन्दिनी बोली—हे सुजन दिलीप ! माया उत्पन्न करके मेरे द्वारा तुम्हारी परीक्षा ली गई । महर्षि वसिष्ठजी के प्रभाव से यमराज भी मुझपर प्रहार करने के लिए समर्थ नहीं है, अन्य हिंसक सिंहादिकों का तो कहना ही क्या ? ॥ ६२ ॥

भक्त्या गुरौ मय्यनुकम्पया च प्रीताऽस्मि ते पुत्र ? वरं वृणोष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥६३॥

सञ्जीविनी—भक्त्येति । पुत्र ! गुरौ भक्त्या मय्यनुकम्पया च ते तुभ्यं प्रीताऽस्मि । 'क्रियाग्रहणमपि कर्तव्यम्' इति चतुर्थी । वरं देवेभ्यो वरणीयमर्थम् । 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' इत्यमरः । वृणीष्व स्वीकुरु । तथाहि—मां केवलानां पयसां प्रसूतिं कारणं नावेहि न विद्धि । किन्तु प्रसन्नां मां कामान्दोग्धीति कामदुघा तामवेहि । 'दुहः कब्घश्च' इति कप्रत्ययः ।

अन्वयः—पुत्र ! गुरौ भक्त्या, मयि अनुकम्पया च ते प्रीता अस्मि । वरं वृणीष्व, मां केवलानां पयसां प्रसूतिं न अवेहि, प्रसन्नां 'मां' कामदुघाम् 'अवेहि' ।

वाच्य०—प्रीतया भूयते ( भाववा० ) वरो व्रियताम्, त्वयाऽहं केवलानां पयसां प्रसूतिर्नावेयै । प्रसन्नाऽहं कामदुघा त्वया अवेयै ( कर्मवा० ) ।

चन्द्रिका—हे पुत्र ! हे वत्स ! गुरौ वसिष्ठे, भक्त्या पूज्यबुद्ध्या, पूज्येष्वनुरागो हि भक्तिः । मयि धेन्वाम् अनुकम्पया दयया । परदुःखप्रहारेच्छा दया, त्वं मद्विषये दयावानसि । चोऽप्यर्थे, ते तुभ्यं, प्रीता प्रसन्ना, अस्मि भवामि । वरम् अभीष्टं, वृणीष्व याचस्व । मां नन्दिनीम्, केवलानाम् एकाकिनाम्, पयसां दुग्धानाम्, प्रसूतिं जनयित्रीम्, न अवेहि मा मन्यस्व । प्रसन्नां प्रीताम्, मां नन्दिनीम्, कामदुघां मनोरथदोग्ध्रीम्, अवेहि जानीहि ।

समासः—कामान् दोग्धीति कामदुघा, ताम् कामदुघाम् ।

कोशः—'भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयोः ।' 'कामः स्मरेच्छाकाम्येषु' इत्यनेकार्थ०, 'कृपा दयाऽनुकम्पा स्यात्' 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ।' 'पयः क्षीरं पयोऽम्बु च' इत्यमरः ।

भावार्थः—दिलीप ! तव गुरुभक्ति मयि दयाभावञ्च विलोक्य प्रसन्ना अस्मि । वरं याचस्व, नाहं केवलं दुग्धदोग्ध्री, अपि तु कामितपूरणकर्त्री अस्मि ।

हिन्दीश्लोकार्थः—हे वत्स ! गुरु वसिष्ठजी पर श्रद्धा, और मेरे ऊपर दयाभाव से तुम पर मैं प्रसन्न हूँ । वर माँगो । मुझे खाली दूधभर देनेवाली गाय मत समझो, अपि तु प्रसन्न होने पर कामना पूरी करनेवाली हूँ ऐसा मानो ॥६३॥

तत: समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्त्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥६४॥

सञ्जीविनी—तत इति । ततो मानितार्थी । स्वहस्तार्जितो वीर इति शब्दो येन, एतेनास्य दातृत्वं दैन्यराहित्यं चोक्तम् । स राजा हस्तौ समानीय सन्धाय । अञ्जलिं बद्ध्वेत्यर्थः । वंशस्य कर्त्तारं प्रवर्त्तयितारम् । अत एव रघुकुलमिति प्रसिद्धिः । अनन्तकीर्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे ।

अन्वयः—ततः मानितार्थी स्वहस्तार्जितवीरशब्दः सः हस्तौ समानीय वंशस्य कर्तारम् अनन्तकीर्ति तनयं सुदक्षिणायां ययाचे ।

वाच्य०—मानितार्थिना स्वहस्तार्जितवीरशब्देन तेन वंशस्य कर्ता अनन्तकीर्तिः तनयो ययाचे ( कर्म० ) ।

चन्द्रिका—ततः नन्दिनीकथनोत्तरम्, मानिताः आदृताः, अर्थिनः याचकाः, येन सः मानितार्थी, स्वहस्तेन निजभुजबलेन, अर्जितः प्राप्तः, वीरशब्दः वीरः (पराक्रमी) इति विरुदः, येन सः दिलीपः, हस्तौ करौ, समानीय संयोज्य, बद्धाञ्जलिर्भूत्वेत्यर्थः, वंशस्य कुलस्य, कर्तारं प्रवर्तयितारम् अनन्तकीर्तिम् अपारयशसम्, तनयम् आत्मजम्, सुदक्षिणायां तन्नाम्न्यां महिष्याम्, ययाचे प्रार्थयामास, वव्रे इत्यर्थः ।

समासः—मानिताः अर्थिनः येन स मानितार्थी ( बहु० ) । स्वस्य हस्तः स्वहस्तः ( ष०त० ) स्वहस्तेन अर्जितः वीर इति शब्दः येन सः ( बहु० ) स्वहस्तार्जितवीरशब्दः । न अन्तो यस्याः सा अनन्ता, अनन्ता कीर्तिर्यस्य सः ( बहुव्रीहिगर्भबहुव्रीहिः ) अनन्तकीर्तिः, तम् अनन्तकीर्तिम् ।

कोशः—'वनीयको याचनको मार्गणो याचकार्थिनौ ।' 'वंशोऽन्ववायः सन्तानः' 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥' 'यशः कीर्तिः समज्ञा च' इति चामराः ।

भावार्थः—राजा दिलीपो नन्दिनीं प्रति बद्धाञ्जलिः वंशप्रवर्तयितारं महाकीर्तिं पुत्रं महिष्यां सुदक्षिणायां देहीति वरं वव्रे ।

हिन्दीश्लोकार्थः—तब याचकों का सम्मान किए हुए और अपने बाहुबल से 'वीर'—ऐसी उपाधि प्राप्त किए हुए राजा दिलीप ने दोनों हाथों को जोड़कर वंशको प्रचलित करनेवाले अनन्तकीर्तिशाली पुत्र को रानी सुदक्षिणा में माँगा ( इसीसे इस वंश का नाम 'रघुवंश' पड़ा । ) ॥ ६४ ॥

सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥६५॥

सञ्जीविनी—सन्तानेति । पयस्विनी गौः । सन्तानं कामयत इति सन्तानकामः, 'कर्मण्यण्' तस्मै राज्ञे तथेति । काम्यत इति कामो वरः । कर्मार्थे घञ्प्रत्ययः । तं प्रतिश्रुत्य प्रतिज्ञाय हे पुत्र ! मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वोपभुङ्क्ष्व । 'उपयुङ्क्ष्व' इति वा पाठः । 'पिब' इति तमादिदेशाज्ञापितवती ।

अन्वयः—सा पयस्विनी सन्तानकामाय राज्ञे तथा इति कामं प्रतिश्रुत्य पुत्र ! मदीयं दुग्धं पत्रपुटे दुग्ध्वा उपभुंक्ष्व इति तम् आदिदेश ।

वाच्य०—तया पयस्विन्या कामं तथेति प्रतिश्रुत्य त्वया मदीयं दुग्धम् उपभुज्यताम् इति स आदिदिशे ( कर्म० ) ।

चन्द्रिका—सा प्रसिद्धा, पयस्विनी धेनुः, सन्तानकामाय सन्ततिप्रार्थिने, राज्ञे दिलीपाय तथेति एवमस्तु इति, कामं वरम्, प्रतिश्रुत्य प्रतिज्ञाय दत्त्वेत्यर्थः, पुत्र ! वत्स !, मदीयं मामकीनम्, पयः दुग्धम्, पत्रपुटे पर्णद्रोण्याम्, दुग्ध्वा प्रदुह्य, उपभुङ्क्ष्व पिब, इति इत्थम्, तं दिलीपम्, आदिदेश आज्ञातवती ।

समासः—प्रशस्तं पयोऽस्या अस्तीति पयस्विनी । सन्तानं कामयते इति सन्तानकामः, तस्मै सन्तानकामाय । पत्राणां पुटः पुत्रपुटः, तस्मिन् पत्रपुटे । मम इदं मदीयम्, तत् मदीयम् ।

कोशः—'सन्तानोऽपत्यगोत्रयोः' इत्यनेकार्थसंग्रहः । 'दुग्धं क्षीरं पयः समम्' इत्यमरः ।

भावार्थः—नन्दिनी पुत्रार्थिने राज्ञे 'एवमस्तु' इति पुत्रवरं दत्त्वा ततः 'राजन् ! पत्रनिर्मिते पात्रे मदीयं क्षीरं दुग्ध्वा पिब', इत्याज्ञां ददौ ।

हिन्दीश्लोकार्थः—श्रेष्ठ दूध वाली नन्दिनीने पुत्र चाहने वाले राजा दिलीप को 'तथास्तु' ऐसा वरदान देकर 'हे वत्स ! मेरे दूध को पत्ते के दोने में दुहकर पीओ' ऐसा आदेश दिया ॥६५॥

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥६६॥

सञ्जीविनी—वत्सस्येति । हे मातः ! वत्सस्य वत्सपीतस्य शेषम्, वत्सपीतावशिष्टमित्यर्थः । होम एवार्थः, तस्य विधिरनुष्ठानं तस्य च शेषम् । होमवशिष्टमित्यर्थः । तव, ऊधसि भवमूधस्यं तदेव औधस्यं क्षीरम् । 'शरीरावयवाच्च' इति यत्प्रत्ययः । रक्षिताया उर्व्याः षष्ठांशं षष्ठभागमिव । ऋषेरनुज्ञामधिगम्य उपभोक्तुमिच्छामि ।

अन्वयः—मातः ! वत्सस्य होमार्थविधेश्च शेषं तव औधस्यं रक्षितायाः उर्व्याः षष्ठांशम् इव ऋषेः अनुज्ञाम् अधिगम्य उपभोक्तुम् इच्छामि ।

वाच्य०—हे मातः ! तवौधस्याम् उर्व्याः षष्ठांश इव मया भोक्तुमिष्यते । ( कर्मवा० ) ।

चन्द्रिका—हे मातः हे जननि ! वत्सस्य तर्णकस्य, 'वत्सौ तर्णकवर्षौ द्वौ' इत्यमरः, होमार्थविधेः यागकार्यानुष्ठानस्य च, शेषम् अवशिष्टम्, तव भवत्याः औधस्यम् ऊधसि भवं दुग्धम्, रक्षितायाः पालितायाः, उर्व्याः, पृथिव्याः, षष्ठांशमिव कररूपेण राजप्राप्यं षष्ठभागं यथा, ऋषेः वशिष्ठस्य, अनुज्ञाम् अनुमोदनं, अधिगम्य प्राप्य, उपभोक्तुं पातुम्, इच्छामि वाञ्छामि ।

समासः—होम एवार्थः, होमार्थः, होमार्थस्य विधिः होमार्थविधिः, तस्य होमार्थविधेः। ऊधसि भवम् ऊधस्यम्, तदेव औधस्यम् ( स्वार्थेऽण्-प्रत्ययः )। तत् औधस्यम्। षण्णां पूरणः षष्ठः, षष्ठश्चासौ अंशश्च षष्ठांशः ( कर्मधा० ) तं षष्ठांशम्।

कोश:—'वत्सौ तर्णकवर्षौ द्वौ' 'ऊधस्तु क्लीबमापीनम्।' 'अंशभागौ तु वण्टके' 'वसुधोर्वी वसुन्धरा' इत्यमरः।

भावार्थः—हे मातः! वत्सपानात् होमोपयोगाच्च अवशिष्टं भवत्या दुग्धं पृथिव्याः षष्ठभागं करमिवाहं वसिष्ठादेशं प्राप्य ग्रहीतुम् अभिलषामि।

हिन्दीश्लोकार्थः—हे मातः! मैं बछड़े के पीने से और होमकार्य से बचे हुए तुम्हारे थन के दूध को पालन की गई पृथिवी के षष्ठांश (छठा हिस्सा मालगुजारी) की भाँति, वसिष्ठजी के आदेश प्राप्त कर ग्रहण करना चाहता हूँ ॥६६॥

इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥६७॥

सञ्जीविनी—इत्थमिति। इत्थं क्षितीशेन वसिष्ठस्य धेनुः प्रीततरा पूर्वं शुश्रूषया प्रीता सम्प्रत्यनया विज्ञापनया प्रीततराऽतिसन्तुष्टा बभूव। तदन्विता तेन दिलीपेनान्विता हैमवताद्धिमवत्सम्बन्धिनः कुक्षेर्गुहायाः सकाशादश्रमेणानायासेनाश्रमं प्रत्याययावागता च।

अन्वयः—इत्थं क्षितीशेन विज्ञापिता वसिष्ठधेनुः प्रीततरा बभूव। तदन्विता हैमवताच्च कुक्षेः अश्रमेण आश्रमं प्रत्याययौ च।

वाच्य०—विज्ञापितया वसिष्ठधेन्वा प्रीततरया बभूवे ( भाववाच्य० ) तदन्वितया आश्रम अश्रमेण प्रत्यायये ( कर्मवा० )।

चन्द्रिका—इत्थम् अनेन प्रकारेण, क्षितीशेन राज्ञा दिलीपेन, विज्ञापिता निवेदिता, सविनयमुक्तेत्यर्थः। वसिष्ठधेनुः नन्दिनी, वसिष्ठधेनुत्वादेव वसिष्ठाज्ञाग्रहणं श्रुत्वा प्रसन्ना जातेति भावः। प्रीततरा हृष्टतरा, बभूव जाता, तेन अन्विता दिलीपेन युक्ता, हैमवतात् हिमालयसम्बन्धिनः, कुक्षेः गह्वरात्, अश्रमेण अक्लेशेन, आश्रमं तपोभूमिम्, प्रत्याययौ च प्रतिनिवृत्ता च।

समासः—क्षितेः ईशः क्षितीशः (ष० त०), तेन क्षितीशेन। वसिष्ठस्य धेनुः वसिष्ठधेनुः (ष० त०)। अत्यधिकं प्रीता प्रीततरा। तेन अन्विता तदन्विता। हिमवतः अयं हैमवतः, तस्मात् हैमवतात्। न श्रमः अश्रमः, तेन अश्रमेण।

कोश.—'पिचण्डकुक्षी जठरोदरं तुन्दम्' इत्यमरः। 'आश्रमो व्रतिनां मठे। ब्रह्मचर्यादिचतुष्केऽपि' इत्यनेका०।

भावार्थः—नन्दिनी विनम्रं दिलीपस्य निवेदनं श्रुत्वा अधिकं प्रसन्ना जाता। दिलीपेन सहाश्रमम् आगता च।

हिन्दीश्लोकार्थः—इस प्रकार राजा दिलीप के निवेदन से अधिक प्रसन्न वसिष्ठजी की धेनु नन्दिनी दिलीप के साथ हिमाचल की गुफा से अनायास ही आश्रम लौट आई ॥६७॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥६८॥

सञ्जीविनी—तस्या इति । प्रसन्नेन्दुरिव मुखं यस्य स नृपाणां गुरुर्दिलीपः प्रहर्षचिह्नैर्मुखरागादिभिरनुमितमूहितं तस्या धेनोः प्रसादमनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात्पुनरुक्तयेव वाचा गुरवे निवेद्य विज्ञाप्य पश्चात्प्रियायै शशंस । कथितस्यैव कथनं पुनरुक्तिः । न चेह तदस्ति ! किन्तु चिह्नैः कथितप्रायत्वात्पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ।

अन्वयः—प्रसन्नेन्दुमुखः नृपाणां गुरुः प्रहर्षचिह्नानुमितं तस्याः प्रसादं पुनरुक्तया इव वाचा गुरवे निवेद्य प्रियायै शशंस ।

वाच्य०—प्रसन्नेन्दुमुखेन नृपाणां गुरुणा गुरवे प्रहर्षचिह्नानुमितः प्रसादः शशंसे । ( कर्म० )

चन्द्रिका—प्रसन्नेन्दुरिव शारदचन्द्र इव वदनं यस्य तादृशः, नृपाणां राज्ञां गुरुः श्रेष्ठः, दिलीपः प्रहर्षस्य अधिकानन्दस्य, चिह्नैः मुखविकासादिभिः, अनुमितं तर्कितम्, तस्याः नन्दिन्याः, प्रसादम् अनुग्रहं, पुनरुक्तयेव आम्रेडितयेव, इवेत्युत्प्रेक्षायाम्, स्थितया, वाचा वचनेन, गुरवे वसिष्ठाय, निवेद्य सविनयं कथयित्वा, पश्चात् अनन्तरम्, प्रियायै प्रेयस्यै सुदक्षिणायै, शशंस सूचयमास ।

समासः—प्रसन्नश्चासौ इन्दुश्च प्रसन्नेन्दुः ( कर्म० ) प्रसन्नेन्दुरिव मुखं यस्य सः प्रसन्नेन्दुमुखः ( बहु० ) । नॄन् पान्ति इति नृपाः, तेषां नृपाणाम् । प्रहर्षस्य चिह्नानि प्रहर्षचिह्नानि ( ष० त० ), प्रहर्षचिह्नैः अनुमितः प्रहर्षचिह्नानुमितः (तृ० त०) तं प्रहर्षचिह्नानुमितम् ।

कोशः—'प्रसन्ना स्त्री सुरायां स्यात् स्वच्छसन्तुष्टयोस्त्रिषु' इति मेदिनी । 'इन्दुः कुमुदबान्धवः' 'आननं लपनं मुखम्' 'प्रसादस्तु प्रसन्नता' 'मुत् प्रीतिः प्रमदो हर्षः' 'चिह्नं लक्ष्म च लक्षणम्' 'गीर्वाग् वाणी सरस्वती' इति चामराः ।

भावार्थः—निजमुखविकासादिलक्षणैः कथितकल्पं नन्दिन्या वरानुग्रहं दिलीपः प्रथमं गुरवे सूचितवान्, पश्चाच्च, भार्यायै इदमाम्रेडनमिवासीत् ।

हिन्दीश्लोकार्थः—विमल चन्द्रमाके समान मुख वाले राजश्रेष्ठ दिलीपने अत्यन्त प्रसन्नता के लक्षणों-मुखनयनादि विकासों से जिसका अनुमान हो गया है, ऐसे नन्दिनी के वरदान रूप अनुग्रह को, मानों दुबारा कही जाने वाली वाणी से ( अनुमान से ज्ञात होने के कारण–'मानों' ) गुरुजी से निवेदन करने के बाद पत्नी को भी सूचित किया ॥६८॥

स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्त्तमिवातितृष्णः ॥६९॥

सञ्जीविनी—स इति । अनिन्दितात्माऽगर्हितस्वभावः । सत्सु वत्सलः प्रेमवान्सद्वत्सलः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । वसिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः स राजा वत्सस्य हुतस्य चावशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरं शुभ्रं मूर्त्तं परिच्छिन्नं यश इव । अतितृष्णः सन् पपौ ।

अन्वयः—अनिन्दितात्मा सद्वत्सलः वसिष्ठेन कृताभ्यनुज्ञः सः वत्सहुतावशेषं नन्दिनीस्तन्यं शुभ्रं मूर्तं यशः इव अतितृष्णः सन् पपौ ।

वाच्य०—अनिन्दितात्मना सद्वत्सलेन वसिष्ठेन कृताभ्यनुज्ञेन तेनातितृष्णेन नन्दिनीस्तन्यं शुभ्रं मूर्तं यश इव पपे ( कर्मवाच्यम् ) ।

चन्द्रिका—अनिन्दितात्मा अकुत्सितशीलः, अर्थात् प्रशंसितस्वभाव इति, सत्सु सज्जनेषु, वत्सलः अनुरागी, वसिष्ठेन गुरुणा ऋषिणा, कृताभ्यनुज्ञः विहितानुमतिः । सः दिलीपः, वत्सस्य शिशोः, हुतस्य होमस्य, च अवशेषम् अवशिष्टम्, नन्दिन्याः धेनोः, स्तन्यं पयः शुभ्रं श्वेतम्, मूर्तं साकारम्, यश इव कीर्तिमिव, अतितृष्णः सन् सात्यन्तस्पृहः भवन् पपौ पीतवान् । 'मूर्तं यश इव' इत्यत्रोत्प्रेक्षा । अप्रसिद्धेन मूर्तयशसा उपमानर्हत्वात् ।

समासः—न निन्दितः अनिन्दितः ( नञ्त० ), अनिन्दितः आत्मा यस्य सः ( बहु० ) । सत्सु वत्सलः सद्वत्सलः (स० त०) । वत्सश्च हुतश्च वत्सहुते (द्वन्द्व०) वत्सहुतयोः अवशेषं वत्सहुतावशेषम् ( ष० त० ), तद् वत्सहुतावशेषम् । कृता अभ्यनुज्ञा यस्य सः ( बहु० ) कृताभ्यनुज्ञः । स्तनेषु भवं स्तन्यम, नन्दियाः स्तन्यं नन्दिनीस्तन्यम् (ष० त०), तत् नन्दिनीस्तन्यम् ।

कोशः—'कुत्सा निन्दा च गर्हणे' 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' 'स्त्रियां मूर्तिस्तनुस्तनूः' 'स्निग्धस्तु वत्सलः' 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इति चामराः । 'यशः कीर्तिः समज्या च' 'तृष्णे स्पृहापिपासे द्वे' इत्यमरौ ।

भावार्थः—प्रशंसितस्वभावः सज्जनप्रियः दिलीपः वशिष्ठस्य आज्ञया वत्सपानानन्तरं होमादिकार्ये उपयोगानन्तरञ्च अवशिष्टं नन्दिनीदुग्धं शरीरधारि यश इव लालसया पीतवान् ।

"हिन्दीश्लोकार्थः—प्रशंसनीय स्वभाववाले, सज्जनों पर स्नेह रखनेवाले, वसिष्ठजी की अनुमति पाये हुए राजा दिलीपने, बछड़े के पीने से तथा हवन से बचे हुए नन्दिनी के दूध को, श्वेत तथा साकार यश की भांति बड़ी चाव से युक्त होकर, पिया ॥ ६९ ॥

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥७०॥

सञ्जीविनी—प्रातरिति । वशी वसिष्ठः प्रातः यथोक्तस्य व्रतस्य गोसेवारूपस्यान्तभूता या पारणा तस्या अन्ते प्रास्थानिकं प्रस्थानकाले भवं तत्कालोचितमित्यर्थः । 'कालाट्ठञ्' इति ठञ्प्रत्ययः । 'यथा कथंचिद् गुणवृत्त्याऽपि काले वर्त्तमानत्वात् प्रत्यय इष्यते' इति वृत्तिकारः । ईयते प्राप्यतेऽनेनेत्ययनं स्वस्त्ययनं शुभावहमाशीर्वादं प्रयुज्य तौ दम्पती स्वां राजधानीं प्रति, प्रस्थापयामास ।

अन्वयः—वशी वसिष्ठः प्रातः यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य, तौ दम्पती स्वां राजधानीं प्रति प्रस्थापयामास ।

वाच्य०—वशिना वसिष्ठेन तौ दम्पती स्वां राजधानीं प्रति प्रस्थापयाञ्चक्राते ( कर्मवा० ) ।

चन्द्रिका—वशी इन्द्रियवशवान्, वसिष्ठः गुरुः, प्रातः प्रभाते, परेद्युरिति शेषः, यथोक्तव्रतस्य गोसेवाव्रतस्य, पारणान्ते व्रतान्तभोजनानन्तरम्, प्रास्थानिकं प्रस्थानकालोचितम्, स्वस्त्ययनं मङ्गलप्रदम् आशीर्वादम् । प्रयुज्य समुच्चार्य तौ सुदक्षिणादिलीपौ, दम्पती जायापती, स्वां निजाम्, राजधानीं प्रति अयोध्यानगरीं प्रति, प्रस्थापयामास प्रेषयामास ।

समासः—उक्तम् अनतिक्रम्य यथोक्तम्, यथोक्तञ्च तद् व्रतञ्च यथोक्तव्रतम् । ( कर्मधा० ) यथोक्तव्रतस्य पारणा यथोक्तव्रतपारणा, यथोक्तव्रतपारणाया अन्तः यथोक्तव्रतपारणान्तः ( ष० त० ), तस्मिन् यथोक्तव्रतपारणान्ते । प्रस्थाने भवं प्रास्थानिकम्, तत् प्रास्थानिकम् । स्वस्ति ईयते अनेनेति स्वस्त्ययनम्, तत् स्वस्त्ययनम् । धीयते अस्यामिति धानी, राज्ञः धानी राजधानी, तां राजधानीम् । वशः अस्यास्तीति वशी । जाया च पतिश्च दम्पती, तौ दम्पती ।

कोशः—'प्रगे प्रातः प्रभाते' 'स्वस्त्याशीःक्षेमपुण्यादौ,' 'यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः' 'दम्पती जम्पती जायापती भार्यापती च तौ ।' 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये' 'नियमो व्रतमस्त्री तत्' इति चामराः ।

भावार्थः—परे दिने प्रातः वसिष्ठः सुदक्षिणादिलीपौ व्रतपारणानन्तरं यात्राकालिकं 'शिवा वां सन्तु पन्थानः, पुत्रवन्तौ भूयास्तम्' इत्यात्मकं शुभाशंसनं विधाय अयोध्यां प्रेषयामास ।

हिन्दीश्लोकार्थः—इन्द्रियों को वश में रखनेवाले वसिष्ठजी ने ( दूसरे दिन ) प्रातःकाल पूर्ववर्णित गोसेवा-व्रत की पारणा होने के पश्चात् यात्राकालोचित स्वस्तिवाचन ( आशीर्वाद ) करके उन दोनों सुदक्षिणा-दिलीप को उनकी राजधानी अयोध्या भेजा ॥ ७० ॥

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥७१॥

सञ्जीविनी—प्रदक्षिणीकृत्येति । नृपो हुतं तर्पितं, हुतमश्नातीति हुताशोऽग्निः । 'कर्मण्यण्' । तं भर्तुर्मुनेरनन्तरम् प्रदक्षिणानन्तरमित्यर्थः । अरुन्धतीं च सवत्सां धेनुं

च प्रदक्षिणोकृत्य प्रगतो दक्षिणं प्रदक्षिणं 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावः, ततश्च्विः। अप्रदक्षिणं प्रदक्षिणं सम्पद्यमानं कृत्वा प्रदक्षिणोकृत्य सद्भिर्मङ्गलाचारैरुदग्रतरप्रभावः-सन् प्रतस्थे।

अन्वयः—नृपः हुतं हुताशं भर्तुः अनन्तरम् अरुन्धतीञ्च सवत्सां धेनुञ्च प्रदक्षिणीकृत्य सन्मङ्गलोदग्रतरप्रभावः 'सन्' प्रतस्थे।

वाच्य०—नृपेण सन्मङ्गलोदग्रतरप्रभावेण 'सता' प्रतस्थे। ( भाववाच्य० )

चन्द्रिका—नृपः राजा, हुतं घृतादिभिः सन्तर्पितम्, हुताशं पावकम्, भर्तुः वसिष्ठस्य, अनन्तरं प्रदक्षिणातः पश्चात्, अरुन्धतीञ्च वसिष्ठपत्नीञ्च, सवत्सां तर्णकयुताम्, धेनुञ्च गां नन्दिनीमपि, प्रदक्षिणीकृत्य परिक्रम्य, सन्मङ्गलैः समीचीनकल्याणकराचरणैः उदग्रतर उन्नततरः, प्रभावः प्रतापः यस्य, तथाभूतः 'सन्' प्रतस्थे प्रययौ। हुताशारुन्धतीवसिष्ठधेनूनां परिक्रमप्रणामादिना उत्कृष्टतरतेजाः दिलीप आश्रमान्निर्ययौ इत्यर्थः।

समासः—हुतम् अश्नातीति हुताशः, तं हुताशम्। न विद्यते अन्तरं यत्र तदनन्तरम् ( क्रियाविशेषणम् )। वत्सेन सह वर्तते इति सवत्सा, तां सवत्साम्। सन्ति च तानि मङ्गलानि च सन्मङ्गलानि ( कर्मधा० ), सन्मङ्गलैः उदग्रतरः प्रभावः यस्य सः सन्मङ्गलोदग्रतरप्रभावः ( बहु० )।

कोशः—'धवः प्रियः पतिर्भर्ता' 'धेनुः स्यान्नवसूतिका' 'वत्सौ तर्णकवर्षौ द्वौ' 'कल्याणं मङ्गलं शुभम्।' 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इति चामराः।

भावार्थः—राजा चर्वाज्यादिभिः प्रज्वलितमग्निं वसिष्ठम् अरुन्धतीं सवत्सां गां नन्दिनीमपि परिक्रमप्रणामादिभिः सम्भाव्य उत्कृष्टतेजाः सन् प्रस्थानम् अकरोत्।

हिन्दीश्लोकार्थः—राजा दिलीप ने घृतादि आहुति से तृप्त किये गये अग्नि की, पहले वसिष्ठजी की अनन्तर अरुन्धतीजी की, बछड़े सहित नन्दिनी की भी प्रदक्षिणा करके, अच्छे मङ्गलमय प्रदक्षिणा आदि कार्यों से बढ़े हुए तेज को धारण करते हुए यात्रा की ॥ ७१ ॥

श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः।
ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥७२॥

सञ्जीविनी—श्रोत्रेति। धर्मपत्नीसहितः। सहिष्णुर्व्रतादिदुःखसहनशीलः स नृपः श्रोत्राभिरामध्वनिना कर्णाह्लादकरस्वनेनानुद्घातः पाषाणादिप्रतिघातरहितः, अत एव सुखयतीति सुखः, तेन रथेन स्वेन पूर्णेन सफलेन मनोरथेनेव मार्गमध्वानं ययौ। मनोरथपक्षे—ध्वनिः श्रुतिः। अनुद्घातः प्रतिबन्धनिवृत्तिः।

अन्वयः—धर्मपत्नीसहितः सहिष्णुः सः श्रोत्राभिरामध्वनिना अनुद्घातसुखेन रथेन स्वेन पूर्णेन मनोरथेनेव 'स्थितेन' मार्गं ययौ।

वाच्य०—धर्मपत्नीसहितेन सहिष्णुना तेन मार्गो यये। ( कर्मवाच्यम् )

चन्द्रिका—धर्मपत्नीसहितः सुदक्षिणायुतः, सुदक्षिणया सहित एव व्रतयागादिकमनुष्ठति दिलीपः, अत एव 'तया मेने मनस्विन्या' इति प्रथमे उक्तम्। सहिष्णुः सुखदुःखपापपुण्यादिद्वन्द्वसहः। सः दिलीपः, श्रोत्रयोः कर्णयोः, अभिरामः मनोहरः, ध्वनिः नादो यस्य तादृशेन। अनुद्घातसुखेन, अनुद्घातः शिलाद्याघातरहितः, अत एव सुखयतीति सुखः सुखकरः, तेन, रथेन स्यन्दनेन, स्वेन स्वीयेन, पूर्णेन सम्पन्नेन, मनोरथेनेव कामेन इव, मार्ग पन्थानम्, ययौ अगमत्।

समासः—धर्मस्य पत्नी धर्मपत्नी ( तादर्थ्ये ष० त० ), धर्मपत्न्या सहितः धर्मपत्नीसहितः। श्रोत्रयोः अभिरामः श्रोत्राभिरामः, श्रोत्राभिरामः ध्वनिः यस्य सः श्रोत्राभिरामध्वनिः ( बहु० ), तेन श्रोत्राभिरामध्वनिना। न उद्घातो यस्य सः अनुद्घातः, सुखयतीति सुखः, अनुद्घातश्चासौ सुखश्च अनुद्घातसुखः ( विशेषणोभयपदकर्मधारयः )।

कोश:—'कर्णशब्दग्रहौ श्रोत्रं' 'ध्वनिध्वानरवस्वनाः' 'सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी।' 'शताङ्गः स्यन्दनो रथः' 'वाञ्छा लिप्सा मनोरथः' 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इति चामरः।

भावार्थः—सुदक्षिणासहितो राजा दिलीपः मार्गे शिलाखण्डादिसंघट्टनाभावात् सुखकरेण कर्णाकर्षकनादवता रथेन, प्रतिबन्धनिवृत्त्या सुखकरेण निजमनोरथेनेव स्थितेन, मार्गेण यात्रां कृतवान्। ( रथमनोरथयोः सादृश्यं प्रतिबन्धाभावः। तत्र रथस्य शिलादिः प्रतिबन्धः, मनोरथस्य तु अभीष्टनिरोधकं पापं प्रतिबन्धः, साम्प्रतं गोसेवया मनोरथप्रतिबन्धकं पापं निवृत्तं रथस्य च 'शिवाः पन्थानः सन्तु' इति गुरोः प्रास्थानकालिकाशीर्वादेन शिलाखण्डादिप्रतिबन्धनिवृत्तिः )।

हिन्दीश्लोकार्थः—धर्मपत्नी सुदक्षिणा से युक्त, व्रतादिदुःख सहन करने वाले राजा दिलीप, कानों को रम्य लग रही है ध्वनि जिसकी और पत्थरों की ठोकर न लगने से सुखप्रद, मानो सफल हुए अपने मनोरथ के समान स्थित, रथ से मार्ग तय करने लगे ॥ ७२ ॥

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम्।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥७३॥

सञ्जीविनी—तमिति। अदर्शनेन प्रवासनिमित्तेनाहितौत्सुक्यं जनितदर्शनोत्कण्ठम् प्रजार्थेन सन्तानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतमङ्गं यस्य तम्। नवोदयं नवाभ्युदयं प्रजास्तृप्तिमनाप्नुवद्भिरतिगृध्नुभिर्नेत्रैः। ओषधीनां नाथं सोममिव तं राजानं पपुः, अत्यास्थया ददृशुरित्यर्थः। चन्द्रपक्षे—अदर्शनं कलाक्षयनिमित्तम् प्रजार्थं लोकहितार्थं व्रतं देवताभ्यः कलादाननियमः 'तं च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः।' इति व्यासः। उदय आविर्भावः। अन्यत्समानम्।

**अन्वयः**—अदर्शनेन आहितौत्सुक्यं प्रजार्थव्रतकर्शिताङ्गं नवोदयं प्रजाः तृप्तिम् अनाप्नुवद्भिः नेत्रैः ओषधीनां नाथम् इव तं पपुः।

**वाच्य०**—अदर्शनेनाहितौत्सुक्यः प्रजार्थव्रतकर्शिताङ्गः नवोदयः प्रजाभिः ओषधीनां नाथ इव स पपे। ( कर्म० )

**चन्द्रिका**—अदर्शनेन अवीक्षणेन, आहितं समुत्पादितम्, औत्सुक्यं कुतूहलं येन सः तम् आहितौत्सुक्यम्। प्रजार्थेन सन्तानफलकेन, व्रतेन अनाहारादिनियमेन, कर्शितं तनूकृतम्, अङ्गं शरीरं, यस्य सः तम् प्रजार्थव्रतकर्शिताङ्गम्, नवः नूतनः, उदयः श्रेयः सम्पत्तिः यस्य सः, तं नवोदयम्। चन्द्रपक्षे—नूतनतया उदयम् आगतम्। प्रजाः जनाः, तृप्तिम् अलम्बुद्धिम्, अनाप्नुवद्भिः अलभमानैः, नेत्रैः नयनैः, ओषधीनां वनस्पतीनाम्, नाथं स्वामिनं चन्द्रम्, इव यथा, तं राजानम्, पपुः सलालसं ददृशुः। (राजचन्द्रयोः उपमानोपमेयभावः। तत्र राजा-आश्रमप्रवासेन अदर्शनात् औत्कण्ठ्यं प्रजानाम् उत्पादितवान् सन्तानार्थञ्च शरीरं कृशम् अकरोत्। पुत्रलाभरूपवरप्राप्त्या नव उदयः अभवत् तस्य। चन्द्रपक्षे—कृष्णपक्षे अदर्शनेन औत्सुक्यजननम्, लोकहितार्थं देवेभ्यः कलाप्रदानरूपेण व्रतेन कृशता देहे। नवाविर्भावात् नवोदयत्वमपि तत्र स्फुटम्। प्रजानेत्राणि नवोदयौ राजचन्द्रौ विलोक्य तृप्तानि न बभूवुः।)

**समासः**—न दर्शनं अदर्शनम् ( नञ्त० ) तेन अदर्शनेन। आहितम् औत्सुक्यं येन सः आहितौत्सुक्यः ( बहु० ) तम् आहितौत्सुक्यम्। प्रजा एवार्थः यस्य सः प्रजार्थः, प्रजार्थश्चासौ व्रतश्च प्रजार्थव्रतः, प्रजार्थव्रतेन कर्शितम् अङ्गं यस्य सः प्रजार्थव्रतकर्शिताङ्गः, तम् प्रजार्थव्रतकर्शिताङ्गम्। नव उदयो यस्य सः नवोदयः, तं नवोदयम्। न आप्नुवन्ति अनाप्नुवन्ति, तैः अनाप्नुवद्भिः ( अनाप्नुवत् अनाप्नुवती अनाप्नुवन्ति-इति रूपाणि।

**कोशः**—'प्रजा स्यात् सन्ततौ जने' 'नियमो व्रतमस्त्री तत्' 'अंगं प्रतीकोऽवयवः' 'नयनं नेत्रमीक्षणं चक्षुरक्षिणी' 'ओषध्यः फलपाकान्ताः' 'सौहित्यं तर्पणं तृप्तिः' इति चामराः।

**भावार्थः**—कतिचिद्दिनपर्यन्तम् अदर्शनात् प्रजा राजविषये अधिकम् उत्कण्ठावत्यः संवृत्ताः, स सन्ततेः कृते व्रतम् अनुष्ठाय कृशो जातः, इदानीं पुनः वरप्राप्त्या अभ्युदयो जातः तस्य, तं सतृष्णैः नेत्रैः विलोक्य तृप्तिरेव न जाता प्रजानां, यथा कृष्णपक्षे अदर्शनात् उत्सुकता वर्धते चन्द्रविषये जनानाम्, देवेभ्यः क्रमेण निजकलादानात् कृशो भवति चन्द्रः, नवोदयो जातश्चेत्, तं विलोक्य जननेत्राणां तृप्तिः न भवति तथैव राजविलोकनेन तृप्तिर्न जातेति भावः। प्रजा राजानं चन्द्रमिव अक्षिणी विस्फार्य चिरमपश्यन्निति तत्त्वम्।

**हिन्दीश्लोकार्थः**—राजा दिलीप और चन्द्रमा में तुलना है, जैसे लोगों को चन्द्रमा को देखकर तृप्ति ( बस, ऐसा विचार ) नहीं होता वैसे ही राजा को देखकर तृप्ति नहीं हुई। राजा और चन्द्रमा में तीन बातों में समानता है। वे हैं—

कुछ दिन न दीख पड़ने से प्रजाओं में उत्सुकता पैदा कर दी है (राजा—वन जाने से और चन्द्र कृष्णपक्ष से)। सन्तति के वास्ते व्रताचरण से राजा का देह पतला हो गया है। चन्द्र तो देवताओं को अपनी कलाप्रदान करने से पतला हो गया है। अब राजा को वर प्राप्ति से नूतन अभ्युदय हुआ है, चन्द्र का तो नया उदय हुआ ही (शुक्लपक्ष में) है ॥ ७३ ॥

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

सञ्जीविनी—पुरन्दरेति। पुरः पुरीरसुराणां दारयतीति पुरन्दरः शक्रः। 'पूःसर्वयोर्दारिसहोः' इति खच्प्रत्ययः। 'वाचंयमपुरन्दरौ च' इति मुमागमो निपातितः। तस्य श्रीरिव श्रीर्यस्य स नृपः पौरैरभिनन्द्यमानः। उत्पताकमुच्छ्रितध्वजम्। 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्' इत्यमरः। पुरं प्रविश्य भुजङ्गेन्द्रेण समानसारे तुल्यबले। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। भुजे भूयो भूमेर्धुरमाससञ्ज स्थापितवान्।

अन्वयः—पुरन्दरश्रीः सः पौरैः अभिनन्द्यमानः उत्पताकं पुरं प्रविश्य भुजङ्गेन्द्रसमानसारे भुजे भूयः भूमेः धुरम् आससञ्ज।

वाच्य०—पुरन्दरश्रिया तेन पौरैरभिनन्द्यमानेन भूमेः धूः आससञ्जे। (कर्म०)

चन्द्रिका—पुरन्दरस्य इन्द्रस्य, श्रीरिव श्रीः सम्पत्तिः, यस्य सः, सः राजा, पौरैः अयोध्यानगरवासिभिः, अभिनन्द्यमानः वर्द्धाप्यमानः, 'जय राजन्! वर्धस्व' इत्याद्रियमाण इत्यर्थः। उत्पताकम् उच्छ्रितवैजयन्तीकं, पुरम् अयोध्याम्, प्रविश्य अन्तर्गत्वा, भुजङ्गेन्द्रेण शेषनागेन, समानः तुल्यः सारः बलम्, यस्य सः, तस्मिन् भुजङ्गेन्द्रसमानसारे, भुजे बाहौ, भूयः पुनः, भूमेः पृथिव्याः, धुरं भारम्, आससञ्ज समादधे, स्थापितवानिति यावत्। सर्गारम्भात् उपजातिनामकं वृत्तम्। तल्लक्षणं यथा 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति वृत्तरत्नाकरे। यत्र तत्र उपेन्द्रवज्रा-इन्द्रवज्रानामके वृत्ते अपि भवतः। तयोर्लक्षणं—'उपेन्द्रवज्रा जतजास्ततो गौ' इति। 'स्यादिन्द्रवज्रा यदि तौ जगौगः' इति च।

समासः—पुरः (पूः—इत्यस्य द्वि० व०) दारयतीति पुरन्दरः, पुरन्दरस्य श्रीरिव श्रीः यस्य सः पुरन्दरश्रीः (बहु०)। उद्गताः पताकाः यस्य तत् उत्पताकम् (बहु०) तत् उत्पताकम्। अभिनन्द्यते असौ अभिनन्द्यमानः। भुजैः गच्छन्तीति भुजङ्गाः, भुजङ्गेषु इन्द्रः भुजङ्गेन्द्रः, भुजङ्गेन्द्रेण समानः सारः यस्य सः भुजङ्गेन्द्रसमानसारः, तस्मिन् भुजङ्गेन्द्रसमानसारे।

कोशः—'पुरुहूतः पुरन्दरः' 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्।' 'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्'। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' 'भुजबाहू प्रवेष्टो दोः' 'भूर्भूमिरचलानन्ता' इति चामराः!

भावार्थः—इन्द्रसमानसम्पत्तिमान् राजा दिलीपः नगरवासिभिः जयकारेण तोष्यमाणः चलत्पताकायुतं पुरं प्रविश्य शेषसमानबले निजभुजे पुनः राज्यभारं गृहीतवान् ।

हिन्दीश्लोकार्थः—इन्द्र के समान सम्पत्ति वाले राजा दिलीपने नगरवासियों से अभिनन्दन पाते हुए, जिसमें पताकायें फहरा रही थीं, ऐसे अयोध्यानगर में प्रवेश करके सर्पराज शेषभगवान् के समान बलवाले अपने बाहु पर फिर से पृथ्वी के पालन का भार धारण किया ॥ ७४ ॥

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

सञ्जीविनी—अथेति—अथ द्यौः सुरवर्त्म । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । अत्रेर्महर्षेर्नयनयोः समुत्थमुत्पन्नं नयनसमुत्थम् । 'आतश्चोपसर्गे' इति कप्रत्ययः । ज्योतिरिव चन्द्रमिवेत्यर्थः । 'ऋक्षेशः स्यादत्रिनेत्रप्रसूतः' इति हलायुधः । चन्द्रस्य त्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—'नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः । तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा ॥ समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयंल्लोकाञ्छीतांशुः सर्वभावनः ॥' इति । सुरसरिद् गङ्गा वह्निना निष्ठ्यूतं निक्षिप्तं 'च्छ्वोः शूडनुनासिके च' इत्यनेन निपूर्वात्ष्ठीवतेर्वकारस्य ऊठ् । 'नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः' इत्यमरः । ऐशं तेजः स्कन्दमिव । अत्र रामायणं—'ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ देवकार्यमिदं देव ! समाधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि ! देवतानामिदं प्रियम् ॥ इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । स तस्या महिमां दृष्ट्वा समन्तादवकीर्यं च ॥ समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ! ॥' इति । राज्ञी सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै सन्ततिलक्षणाय गुरुभिर्महद्भिर्लोकपालानामनुभावैस्तेजोभिरभिनिविष्टम्, अनुप्रविष्टं गर्भमाधत्त दधावित्यर्थः । अथ मनुः—'अष्टानां लोकपालानां वपुर्धारयते नृपः ।' इति । 'आधत्त' इत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते । तथा मन्त्रे च दृश्यते—'यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवं त्वं गर्भमाधेहि दशमे मासि सूतवे ॥' इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारण आधानशब्दप्रयोगदर्शनादिति । मालिनीवृत्तमेतत् । तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ।

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेते महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये नन्दिनोवरप्रदानो नाम द्वितीयः सर्गः ॥ २ ॥

अन्वयः—अथ द्यौः अत्रेः नयनसमुत्थं ज्योतिरिव सुरसरित् वह्निनिष्ठ्यूतम् ऐशं तेज इव राज्ञी नरपतिकुलभूत्यै गुरुभिः लोकपालानुभावैः अभिनिविष्टं गर्भम् आधत्त।

वाच्य०—अथ दिवा ज्योतिरिव, सुरसरिता तेज इव, राज्ञ्या लोकपालानुभावैः अभिनिविष्टः गर्भः आधीयत। ( कर्मवा० )

चन्द्रिका—अथेति मङ्गलार्थकम्, द्यौः गगनम्, अत्रेः अनसूयापतेर्मुनेः, नयनसमुत्थम् नेत्रोद्भवम्, ज्योतिरिव चन्द्रमिव, सुरसरिद् जाह्नवी, वह्निनिष्ठ्यूतम् अग्निना तिक्षिप्तम्, ऐशं रुद्रसम्बन्धि, तेजः स्कन्दमिव, राज्ञी सुदक्षिणा, नरपतेः दिलीपस्य, कुलभूत्यै वंशाभ्युदयाय, गुरुभिः वृहद्भिः, लोकपालानुभावैः दिगधिपतितेजोभिः, अभिनिविष्टम् अन्तःप्रविष्टम्, गर्भं भ्रूणम्, आधत्त दध्रे, धारितवतीत्यर्थः।

समासः—नयनयोः समुत्थम् नयनसमुत्थम्, तत् नयनसमुत्थम्। सुराणां सरित् ( ष० त० ) सुरसरित्। ईशस्येदम् ऐशम्, तत् ऐशम्। नराणां पतिः नरपतिः, नरपतेः कुलं नरपतिकुलम्, नरपतिकुलस्य भूतिः नरपतिकुलभूतिः ( ष०त० ), तस्यै नरपतिकुलभूत्यै। लोकान् पालयन्तीति लोकपालाः, लोकपालानाम् अनुभावाः, लोकपालानुभावाः, तैः लोकपालानुभावैः।

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।' 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः। 'ज्योतिरग्नौ दिवाकरे। पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी। 'भूतिर्भस्मनि सम्पदि' 'गर्भो भ्रूण इमौ समौ।' इति चामरो।

भावार्थः—यथा द्यौरत्रिनेत्रोत्पन्नं चन्द्रं दधार, यथा वा सुरनदी गङ्गा वह्निपातितं स्कन्दं दधार, तथा सुदक्षिणा अष्टदिक्पालानां तेजोभिः संगतं गर्भं दिलीपस्य वंशसम्पत्तिसंवर्धनाय दधार। ( चन्द्र-स्कन्दधारणविषये पौराणिकः प्रमाणांशः श्रीमल्लिनाथेन समुद्धृतः )।

हिन्दीश्लोकार्थः—तदनन्तर आकाश ने जैसे अत्रिमुनि के नयनों से उत्पन्न चन्द्रमा को और देवनदी गङ्गा ने जैसे अग्नि से प्रक्षिप्त रुद्रसम्बन्धि स्कन्दजनक वीर्य को धारण किया, उसी प्रकार रानी सुदक्षिणा ने भी राजा दिलीप के वंश की सम्पत्ति के लिए श्रेष्ठ लोकपालों के तेज से संयुक्त गर्भ को धारण किया। ( लोकपालों का अंश राजा में रहता है यह प्रमाण-सिद्ध है ) ॥ ७५ ॥

जितपूर्वेन्द्रियाचार्यो रघुवंशद्वितीयके।
संयोज्य विवृतिं काञ्चित् कृष्णपादार्पितां व्यधात् ॥

इति सविवृतौ रघुवंशे द्वितीयः सर्गः समाप्तः।